# ॥ श्रीदुर्गासप्तशती ॥



प्रकाशक—

श्रीमहेशचन्द्र भट्टाचार्य एण्ड को०

८४ नं० क्लाइव ष्ट्रीट,

कलकत्ता ।



प्रथम संस्करण ] १९३७ [ मूल्य १)

॥ श्रीगणेशाय नमः ॥

# ॥ श्री दुर्गासप्तशती ॥



## ॥ अथ पाठक्रमः ॥

साधकः कृतप्रातर्नित्यकृत्यः प्राङ्मुख आचामेत् ॥

आचमनम् ॥

ॐ ऐं आत्मतत्त्वं संशोधयामि नमः स्वाहा ।

ॐ ह्रीं विद्यातत्त्वं संशोधयामि नमः स्वाहा ॥

ॐ क्लीं शिवतत्त्वं संशोधयामि नमः स्वाहा ॥

इति तत्त्वत्रयेणाचम्य पवित्रपाणिः प्राणानायम्य मूलेन वामनासया वायुमापूर्य कुम्भकेन चतुर्वारं मूलं पठित्वा वारद्वयं मूलमुच्चरन् दक्षनासया तं रेचयेत् ॥ ततो गणाधिपादीन्नत्वा संकल्पं कुर्यात् ॥

॥ संकल्पः ॥

देशकालौ संकीर्त्य अस्माकं सर्वेषां० समस्तमंगलावाप्त्यर्थं अमुकगोत्रस्यामुकनाम्नो मम अमुककामनासिद्धये

महाकाली महालक्ष्मी महासरस्वतीस्वरूपिणी त्रिगुणात्मिका-महालक्ष्मीप्रीत्यर्थं कवचार्गलाकीलकैकादशन्यासपूर्वकनवार्णमंत्राष्टोत्तरशतजपरात्रिसूक्तपाठपूर्वकं देवीसूक्तपठननवार्णमंत्राष्टोत्तरशतजपरहस्यत्रयपठनांतं श्रीचंडीसप्तशत्याः पाठमहं करिष्ये ॥ तदंगत्वेनादौ संक्षेपत आसनविधिभूशुद्धिभूतशुद्ध्यादि कर्म दीपस्थापनपूजने सप्तशतीपुस्तकपूजनं रहस्योक्तयंत्रस्थप्रधानदेवतापूजनं वा तंत्रोक्तनवार्णयंत्रस्थप्रधानदेवतापूजनं पूजांगबलिदानं सकलशापप्रतिरोधिनिवृत्तये शापोद्धारमंत्रस्य सप्तसंख्याकजपं पाठादौ पाठान्ते चैकविंशतिसंख्याकतंत्रोक्तोत्कीलनमंत्रजपं च करिष्ये ॥ आदौ निर्विघ्नतासिद्ध्यर्थं महागणपतिस्मरणं पूजनं वा करिष्ये ॥ गणा० स्मरणे पूजने वा विनियोगः ॥

ॐ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमं । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनं इति ॥ तथा गुरुं च ॥ नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः । आचार्यसिद्धेश्वर-

पादुकाभ्यो नमोस्तु लक्ष्मीपतिपादुकाभ्यः ॥ इति गण-
पतिं गुरुं च प्रणमेत् ॥

॥ आसनविधिः ॥

कल्पितासनाधों जलादिना त्रिकोणं विलिख्य—ॐ ह्रीं
आधारशक्तिकमलासनाय नमः इत्याधारशक्तिं संपूज्य तदु-
पर्यनुद्भिन्नताकरमजिनोर्णाद्यासनमास्तीर्य पृथ्वीति मंत्रस्य
मेरुपृष्ठऋषिः कूर्मो देवता सुतलं छंदः आसने विनियोगः ।
ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता त्वं च धारय
मां देवी पवित्रं कुरुचासनम् ॥ इति मंत्रेण आधारशक्तिं
संप्रार्थ्य ॐ भूर्भुवः स्वरित्यासनं संप्रोक्ष्य तस्मिन्नासने
प्राङ्मुख उदङ्मुखो वोपविशेत् ॥

॥ गुरुप्रणामः ॥

ततः स्ववामे गुरुभ्यो नमः । दक्षिणे भद्रकाल्यै नमः ।
उपरि गणपतये नमः ॥ इति द्वारदेवताः संपूज्य मूलं पठन्
दिव्यदृष्ट्यवलोकनेन दिव्यान् विघ्नानुत्सार्य ॐ फडिति
मंत्रेण प्रोक्षणेनांतरिक्षस्थान् विघ्नानुत्सार्य तेनैव मंत्रेण भूमौ
वामपादपार्ष्णिघातेन भौमान् विघ्नानुत्सार्य अस्त्राय फडिति
तालत्रयेण दिग्बंधनं कृत्वा ॐ नमः सुदर्शनायास्त्राय

फडिति मंत्रेण छोटिकया वह्निप्राकारत्रयं विभाव्य मूलेनाचम्य प्राणायामं कुर्यात् ॥

॥ अथ भूशुद्धिः ॥

ॐ हुमिति बीजेन कुंडलिनीमुत्थाप्य हृदयस्थं दीपकलिकाकारं जीवं ॐ हं सः इति मंत्रेण ब्रह्मणि संयोज्य वामकुक्षिस्थितं पापपुरुषमसद्वासनात्मकं ध्यात्वा यमिति वायुबीजेन ३२ द्वात्रिंशद्वारमावर्तितेन संशोष्य रमित्यग्निबीजेन ६४ चतुःषष्टिवारमावर्तितेन तं दग्ध्वा भूयो यमिति वायुबीजेन १६ षोडशमात्रया तद्भस्म रेचयित्वा वमित्यमृतबीजेन प्राणायामं कुर्यात् ॥ इति भूशुद्धिः ॥

॥ अथ भूतशुद्धिः ॥

इडया वायुमापूर्य कुंभके हं यं रं लं वं इति पंच भूतबीजानि सकृदावर्त्य पिंगलया रेचयेत् ॥ ततो वमित्यमृतबीजेन प्राणायामं कृत्वा सद्वासनात्मकं देवीशरीरमुत्पाद्य सोहं इति मंत्रेण कुंडलिनीं ब्रह्मणोवहृत्य तत्रस्थं जीवं हृदि निधाय कुंडलिनीं मूलाधारगतां विभावयेत् ॥

॥ अथ प्राणप्रतिष्ठा ॥

आं ह्रीं क्रौं मम प्राणा इह प्राणाः ।

आं ह्रीं क्रौं मम जीव इह स्थितः ।

आं ह्रीं क्रौं मम सर्वेन्द्रियाणीह स्थितानि ।

आं ह्रीं क्रौं मम वाङ्मनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राणप्राणाः इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥

ॐ असुनीते पुनरस्मासु चक्षुपुनः प्राणमिह नो धेहि भोगं । ज्योक्पश्येम सूर्यमुच्चरंतमनुमते मृड़यानः स्वस्ति ॥ गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थं पंचदशप्रणवावृत्तीः करिष्ये इति ॐकारं १५ वारं जपेत् । रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढ़ाकराब्जैः पाशं कोदंडमिक्षूद्भवमथ गुणमप्यंकुशं पंचबाणान् । बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परानः ॥ सुप्रतिष्ठितमस्तु ॥ इति प्राणप्रतिष्ठा ॥

॥ अथ मातृकान्यासः ॥

ॐ अं नमः ललाटे ॥ आं नमः मुखवृत्ते ॥

ॐ इं नमः दक्षनेत्रे ॥ ईं नमः वामनेत्रे ॥

ॐ उं नमः दक्षकर्णे॥ ऊं नमः वामकर्णे ॥

ॐ ऋं नमः दक्षनसि ॥ ॠं नमः वामनसि ॥

ॐ ऌं नमः दक्षगंडे ॥ ॡं नमः वामगंडे ॥

ॐ एं नमः ऊर्ध्वोष्ठे ॥ ऐं नमः अधरोष्ठे ॥

ॐ ओं नमः ऊर्ध्वदंतपंक्तौ ॥ औं नमः अधोदंतपंक्तौ ॥

ॐ अं नमः शिरसि ॥ अः नमः मुखे ॥

ॐ कं नमः दक्षबाहुमूले ॥ खं नमः दक्षकूर्परे ॥

ॐ गं नमः दक्षिण मणिबंधे ॥ घं नमः दक्षांगुलिमूले ॥

ॐ ङं नमः दक्षांगुल्यग्रे ॥ चं नमः वामबाहुमूले ॥

ॐ छं नमः वामकूर्परे ॥ जं नमः वाममणिबंधे ॥

ॐ झं नमः वामांगुलिमूले ॥ ञं नमः वामांगुल्यग्रे ॥

ॐ टं नमः दक्षपादमूले ॥ ठं नमः दक्षजानुनि ॥

ॐ डं नमः दक्षगुल्फे ॥ ढं नमः दक्षपादांगुलिमूले ॥

ॐ णं नमः दक्षपादांगुल्यग्रे ॥ तं नमः वामपादमूले ॥

ॐ थं नमः वामजानुनि ॥ दं नमः वामगुल्फे ॥

ॐ धं नमः वामांगुलिमूले ॥ नं नमः वामांगुल्यग्रे ॥

ॐ पं नमः दक्षपार्श्वे ॥ फं नमः वामपार्श्वे ॥

ॐ बं नमः पृष्ठे ॥ भं नमः नाभौ ॥

ॐ मं नमः जठरे ॥ यं नमः हृदि ॥
ॐ रं नमः दक्षांसे ॥ लं नमः ककुदि ॥
ॐ वं नमः वामांसे ॥ शं नमः हृदयादिदक्षहस्तांतम् ॥
ॐ षं नमः हृदयादिवामहस्तांतम् ॥ सं नमः हृदयादिदक्ष-
पादांतम् ॥ ॐ हं नमः हृदयादि वामपादान्तम् ॥
ॐ ड़ं नमः जठरे ॥ क्षं नमः मुखे ॥ प्रणवादिः
सर्वत्रेति तत्त्वमुद्रया मातृकान्यासं कुर्यात् ॥

॥ अथ दीपप्रतिष्ठा ॥

मूलेनाचाम्य प्राणानायम्य कर्मसाक्षित्वेन दीपस्थापनं कुर्यात् ॥ तत्र दीपाधारयंत्रं त्रिकोणं गंधेन देवीदक्षिणतो लिखित्वा दीपाधारयंत्राय नमः ॥ इति मंत्रेण संपूज्य तदुपरि दीपं संस्थाप्य गन्धादिना दीपं संपूज्य प्रार्थयेत् ॥ भो दीप देवीरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् ॥ यावत्कर्मसमाप्तिः स्यात्तावत्त्वं सुस्थिरो भव ॥ इति दीपं संप्रार्थ्य तथैव वामेऽपि तैलदीपं प्रज्वालयेत् ॥

॥ अथ यंत्र-पूजा ॥

तत्र स्फटिकहेमताम्राद्यन्यतमपत्रे पात्रे वा यथाशक्ति गन्धाष्टकेन रक्तचन्दनेन वा नवकोष्ठं यंत्रं लिखित्वा—

प्रथम पंक्तावीशानकोणादग्निकोणपर्यंतं गौरीरुद्रौ सरस्वती-विरिंचो लक्ष्मीविष्णू इति क्रमेण स्थाप्य मध्यपंक्तावुत्तरतः दक्षिणांतं महाकाली महालक्ष्मी महासरस्वत्यः तथा तृतीय-पंक्तौ वायुकोणतो निर्ऋतिकोणपर्यंतं क्रमेण दशाननाष्टादश-भुजाऽष्टभुजाः स्थापयेत् । अत्र तृतीयपंक्तिमध्यकोष्ठस्थायाः अष्टादशभुजायाः दक्षे सिंहं वामे महिषं च स्थापयेत् ॥ ततः पूर्वोक्तप्राणप्रतिष्ठामंत्रेण यंत्रस्य प्राणप्रतिष्ठां कृत्वा-ऽऽवाहनादिषोडशोपचारैः संपूज्य मूलभूतां तुरीयां महालक्ष्मीं विश्वेश्वरीं जगद्धात्रीं० इत्यादिभिश्चरित्रत्रयोक्तैः स्तोत्रैः स्तुवीत ॥

॥ अथ पूजाविधिः ॥

अस्य श्रीनवार्णमंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः गाय-त्र्युष्णिगनुष्टुभश्छन्दांसि श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः नन्दाशाकंभरीभीमाः शक्तयः रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि अग्निवायुसूर्यास्तत्त्वानि श्रीजगदम्बाप्रीत्यर्थे न्यासे पूजायां च विनियोगः ॥ ऋष्यादिन्यासान् मूलषडंगन्या-सांश्च विधाय कलशशंखघंटादि संपूज्य ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत् पुंडरीकाक्षं स

वाह्याभ्यन्तरः शुचिः ॥ मूलेनात्मानं पूजाद्रव्याणि प्रोक्षेत् ॥ यंत्रं संस्पृश्य ॐ आं सोहं इति त्रिवारोच्चारितमंत्रेण यंत्रस्य प्राणप्रतिष्ठां कृत्वा ततः त्रिखण्डामुद्राया पुष्पमादाय स्वहृदिस्थां त्रिगुणां देवीं सुषुम्णामार्गेण ब्रह्मरन्ध्रद्वारा कुसुमे समागतां विभाव्य तत्र रूपत्रयं बिभ्राणां ध्यायेत् ॥

॥ अथ ध्यानम् ॥

खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुशुण्डीं शिरः
शंखं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ॥
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुंकैटभम् ॥ १ ॥

अक्षस्त्रक्परशुं गदेषु कुलिशं पद्मं धनुः कुण्डिकां
दंडं शक्तिमसिं च चर्म जलजं घंटां सुराभाजनम् ॥
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रसन्नाननां
सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ २ ॥

घण्टाशूलहलानि शंखमुसले चक्रं धनुः सायकं
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम् ॥
गौरीदेहसमुद्भवां त्रिनयनामाधारभूतां महा-
पूर्वामत्र सरस्वतीमनुभजे शुम्भादि दैत्यार्दिनीम् ॥ ३ ॥

तत्पुष्पं यंत्रे संस्थाप्य तत्र मध्यबीजत्रये महालक्ष्म्यादि-देवतात्रयं संस्थितं विभावयेत् । तत आवाहनी—स्थापनी-संनिधापिनी-संनिरोधिनी-धेनु-योनिमुद्रामूलेन प्रदर्श्य मूल-मुच्चार्य श्रीमहाकाली महालक्ष्मीमहासरस्वत्यै नमः आवाह-यामि ॥

एवं मूलेनासनपाद्यार्घ्याचमनीयस्नानमंगलस्नानमधुपर्क-पंचामृतपूजां विधाय श्रीएकपुरुष सूक्तादिभिरभिषिंच्य मूलेन वस्त्रोपवस्त्रोत्तरीयकंचुकीयज्ञोपवीतचन्दनालंकारहरिद्रा-कुंकुमकज्जलसिन्दूरपरिमलद्रव्यकङ्कणकण्ठसूत्रादिसौभाग्यालं-कारपुष्पाणि मूलेन श्रीमहाकालीमहालक्ष्मी महासरस्वत्यै नमः अमुकद्रव्यं समर्पयामीति प्रत्युपचारमुच्चार्य मंत्रपुष्पांत-पूजां कृत्वा आवरणदेवता आवाह्य संपूजयेत् । अत्र सर्वत्रापि यथाक्रमं प्रागादिशो ग्राह्याः । इन्द्रादिलोकपाला-द्यावाहनविषये तु प्रागादिक्रम एवेति ज्ञेयम् । तत्र यंत्र-षट्कोणस्थपूर्वकोणे सरस्वतीब्रह्मभ्यां नमः सरस्वती ब्रह्मणा-वाहयामीत्येवं सर्वत्रावाहने वाच्यम् १ एवमीशान-कोणे गौरीरुद्राभ्यां नमः । २ आग्नेयकोणे लक्ष्मी-हृषीकेशाभ्यां नमः ३ पश्चिमकोणे अष्टादशभुजायै नमः ४

वायव्यकोणे दशाननायै नमः ५ नैर्ऋत्यकोणे अष्टभुजायै नमः ६ दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ अनेन प्रथमावरणार्चनेन भगवती श्रीमहाकाली महालक्ष्मी महासरस्वती प्रीयंताम् ॥ १ ॥ पुनः षट्कोणेषु प्रागादिदिक्षु ॥

१ । ॐ नं नंदजायै नमः । २ । ॐ रं रक्तदंतिकायै नमः ।
३ । ॐ शां शाकंभर्यै नमः । ४ । ॐ दुं दुर्गायै नमः ।
५ । ॐ भीं भीमायै नमः । ६ । ॐ भ्रां भ्रामर्यै नमः ।
दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् ॥ २ ॥

षट्कोणाद्बहिराग्नेय्यादिचतुर्भागेषु—

१ । ॐ जं जयायै नमः । २ । ॐ विं विजयायै नमः ।
३ । ॐ जं जयंत्यै नमः । ४ । ॐ अं अपराजितायै नमः ।
५ । षट्कोणपार्श्वयोर्दक्षिणभागे ॐ सिंहाय नमः ।
६ । उत्तरभागे ॐ महिषाय नमः दयाब्धे० ॥
तृतीयावरणार्चनम् ॥ अनेन तृ० ॥ ३ ॥

अष्टदलेषु प्रागादिषु १ । ॐ ब्रां ब्राह्म्यै नमः ।
२ । ॐ मां माहेश्वर्यै नमः । ३ । ॐ कौं कौमार्यै नमः ।
४ । ॐ वैं वैष्णव्यै नमः । ५ । ॐ वां वाराह्यै नमः ।

६। ॐ नां नारसिंह्यै नमः। ७। ॐ ऐं ऐंद्र्यै नमः।
८। ॐ चां चामुंडायै नमः। दयाब्धे त्राहि संसार०
चतुर्थावरणार्चनम्॥ अनेन०॥ ४॥

पुनरष्टदलेषु प्रागादिषु १। ॐ अं असितांगभैरवाय नमः।
२। ॐ रुं रुरुभैरवाय नमः। ३। ॐ चं चंडभैरवाय नमः।
४। ॐ क्रों क्रोधभैरवाय नमः। ५। ॐ उं उन्मत्तभैरवाय नमः।
६। ॐ कं कपालभैरवाय नमः। ७। ॐ भीं भीषणभैरवाय०।
८। ॐ सं संहारभैरवाय नमः। दयाब्धे त्राहि संसार०
पंचमावरणार्चनम्॥ अनेन०॥ ५॥

केसरेषु प्रागादिक्रमेण १। ॐ विष्णुमायायै नमः।
२। ॐ चैतनायै नमः। ३। ॐ बुद्ध्यै नमः।
४। ॐ निद्रायै नमः। ५। ॐ क्षुधायै नमः।
६। ॐ छायायै नमः। ७। ॐ शक्त्यै नमः।
८। ॐ तृष्णायै नमः। ९। ॐ क्षांत्यै नमः।
१०। ॐ जात्यै नमः। ११। ॐ लज्जायै नमः।
१२। ॐ शांत्यै नमः। १३। ॐ श्रद्धायै नमः।
१४। ॐ कांत्यै नमः। १५। ॐ लक्ष्म्यै नमः।
१६। ॐ धृत्यै नमः। १७। ॐ वृत्यै नमः।

१८ । ॐ स्मृत्यै नमः । १९ । ॐ दयायै नमः ।

२० । ॐ तुष्ट्यै नमः । २१ । ॐ पुष्ट्यै नमः ।

२२ । ॐ मात्रे नमः । २३ । ॐ भ्रांत्यै नमः ॥

दयाब्धे त्राहि० षष्ठावरणार्चनम् ॥ अनेन० ॥ ६ ॥

प्रागादिषु लोकपालान् । १ । ॐ लं इंद्राय नमः ।

२ । ॐ रं अग्नये नमः । ३ । ॐ मं यमाय नमः ।

४ । ॐ क्षं निर्ऋतये नमः । ५ । ॐ वं वरुणाय नमः ।

६ । ॐ यं वायवे नमः । ७ । ॐ सं सोमाय नमः ।

८ । ॐ हं रुद्राय नमः ईशानीप्रागंतराले ९ । ॐ आं ब्रह्मणे०

१० । वरुण निर्ऋत्यंतराले ह्रीं शेषाय नमः० ।

दयाब्धे० सप्तमावरणार्चनम् ॥ अनेन० ॥ ७ ॥

पुनस्तेनैव क्रमेण १ । ॐ वं वज्राय नमः २ । ॐ शं शक्त्यै नमः ।

३ । ॐ दं दंडाय नमः । ४ । ॐ खं खड्गाय नमः ।

५ । ॐ पां पाशाय नमः । ६ । ॐ अं अंकुशाय नमः ।

७ । ॐ गं गदायै नमः । ८ । ॐ त्रिं त्रिशूलाय नमः ।

९ । ॐ पं पद्माय नमः । १० । ॐ चं चक्राय नमः ।

दयाब्धे० अष्टमावरणार्चनम् ॥ अनेन० ॥ ८ ॥

भूगृहाद्बहिः प्रागादिदिक्षु १ । ॐ गं गणपतये नमः २ । ॐ अँ क्षें क्षेत्रपालाय नमः ३ । ॐ बं बटुकाय नमः ४ । ॐ यों योगिनीभ्यो नमः ॥ दयाब्धे० नवमावरणार्चनम् ॥ अनेन० ॥ ६ ॥

ॐ आवरण देवताभ्यो नमः चन्दनं० इत्यादिपं चोपचार पूजा ॥ ततः मूलमुच्चार्य श्रीमहाकाली महालक्ष्मी महासरस्वती ३ धूपं दीपं नैवेद्यं तांबूलं दक्षिणां फलानि महानीराजनदीपं कर्पूरदीपं नमस्कारान् प्रदक्षिणाः मंत्रपुष्पं० ॥

॥ अथ क्षमाऽपराधम् ॥

अपराधसहस्राणि क्रियंतेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वरि ॥ १ ॥
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि क्षम्यतां परमेश्वरि ॥ २ ॥
मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ।
यत्पूजितं मया देवि परिपूर्णं तदस्तु मे ॥ ३ ॥
अपराधशतं कृत्वा जगदंबेति चोच्चरेत् ।
यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः ॥ ४ ॥

सापराधोस्मि शरणं प्राप्तस्त्वा जगदम्बिके ।
इदानीमनुकंप्योऽहं यथेच्छसि तथा कुरु ॥ ५ ॥
अज्ञानाद्विस्मृतेर्भ्रांत्या यन्न्यूनमधिकं कृतम् ।
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥ ६ ॥
कामेश्वरि जगन्मातः सच्चिदानन्दविग्रहे ।
गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि ॥ ७ ॥
गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात् सुरेश्वरि ॥ ८ ॥

इति प्रार्थना ॥

गीतवाद्यनृत्यछत्रचामरांदोलनदर्पणादिसर्वराजोपचारार्थेअ-क्षतान्० ॥ नमस्करोमि ॥ अनेन यथाशक्त्यर्चनेन भगवती श्रीजगदम्बा प्रीयताम् ॥ शाक्तेभ्यो नमः सर्वोपचारार्थे गन्धाक्ष० ॥

अथ कुमारीपूजा ॥

यजमानः पूजयेच्च कन्यानां नवकं शुभम् ।
द्विवर्षाद्या दशाब्दांताः कुमारीः परिपूजयेत् ॥ १ ॥

अर्थादेकहायन्यः अल्पवयस्का वर्ज्याः ॥ ता आसने उपवेश्यावाहयेन्मंत्रेण ॥

मंत्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम् ।

नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥ १ ॥

अनेनैव मंत्रेण नवापि आवाहयेत् । अशक्तौ यथाशक्ति एकामपि ॥

॥ अथ नवानां पूजामंत्रः ॥

द्विहायनी कूमारीसंज्ञका, तत्पूजामंत्रः—

सर्वस्वरूपे सर्वेशे शर्वशक्तिस्वरूपिणि ।

पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तु ते ॥ २ ॥

त्रिहायनी त्रिमूर्तिः, तन्मंत्रः—

त्रिपुरां त्रिपुराधारां त्रिवर्षां ज्ञानरूपिणीम् ।

त्रैलोक्यवंदितां देवीं त्रिमूर्तिं पूजयाम्यहम् ॥ ३ ॥

चतुर्वर्षा कल्याणी, तत्पूजामंत्रः—

कलात्मिकां कलातीतां कारुण्यहृदयां शिवाम् ।

कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम् ॥ ४ ॥

पञ्चवर्षा रोहिणी, तत्पूजामंत्रः—

अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ।

अनंतशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ॥ ५ ॥

षड्वर्षा कालिका, तत्पूजामंत्रः—

कामचारां शुभां कांतां कालचक्रस्वरूपिणीम् ।
कामदां करुणोदारां कालिकां पूजयाम्यहम् ॥ ६ ॥

सप्तवर्षा चण्डिका, तत्पूजामंत्रः—

चंडवीरां चण्डमायां चण्डमुण्डप्रभंजनीम् ।
पूजयामि सदा देवीं चंडिकां चंडविक्रमाम् ॥ ७ ॥

अष्टवर्षा शांभवी, तत्पूजामंत्रः—

सदानंदकरीं शान्तां सर्वदेवनमस्कृताम् ।
सर्वभूतात्मिकां लक्ष्मीं शांभवीं पूजयाम्यहम् ॥ ८ ॥

नवहायनी दुर्गा, तत्पूजामंत्रः—

दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम् ।
पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् ॥ ९ ॥

दशवर्षा सुभद्रा, तत्पूजामंत्रः—

सुन्दरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम् ।
सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ॥ १० ॥

इति प्रत्येकं मन्त्रान्ते तत्तन्नाममंत्रेण नवापि षोडशोपचारैः पंचोपचारैर्वा पूजयेदिति ॥

॥ अथ बलिदानम् ॥

मूल मंत्रान्ते श्रीमहालक्ष्म्यै नमः पायसबलिं समर्पयामि इति महाकाल्यादियोगिन्यंतयंत्रस्थावरणदेवताभ्यः प्रत्येकं सर्वाभ्यो बलीन् दद्यात् ॥

अथ कूष्मांडबलिः ॥

आचम्य प्राणानायम्य देशकालाद्युच्चार्य मम सकुटुम्बस्य सर्वारिष्टशान्तिसर्वाभीष्टसिद्धिकल्पोक्तफलावाप्तिद्वारा श्रीमहाकाली महालक्ष्मी महासरस्वती देवताप्रीत्यर्थं कूष्माण्डबलिदानं करिष्ये। तदंगत्वेन पंचोपचारैः पूजनं बलिपूजनं च करिष्ये ॥

मूलमंत्रेणमुख्यदेवतां पंचोपचारैः संपूज्य तत्पुरतः स्वयमुदङ्मुखो बलिं प्राङ्मुखं पीठे वस्त्रगुंठितं कूष्माडं निधाय ॐ कूष्मांडबलये नमः ॥ इति आवाहनवस्त्रगंधादिभिः संपूज्याभिमंत्रयेत् ॥

पशुस्त्वं बलिरूपेण मम भाग्यादवस्थितः।<br>
प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥ १ ॥

चण्डिकाप्रीति दानेन दातुरापद्विनाशनम् ।
चामुण्डाबलिरूपाय बले तुभ्यं नमोऽस्तु ते ॥ २ ॥

यज्ञार्थं बलयः सृष्टाः स्वयमेव स्वयंभुवा ।
अतस्त्वां घातयाम्यद्य यस्माद्यज्ञं वधोऽवधः ॥ ३ ॥

ततः शस्त्रं गंधादिना संपूज्याभिमंत्रयेत् । ॐ ऐं ह्रीं श्रीं रसना त्वं चंडिकायाः सुरलोकप्रसाधकः । इति ह्रां ह्रीं खड्ग आं हुं फट् इति हस्ते शस्त्रं गृहीत्वा ॐ कालवज्रेश्वरि लौहदंडायै नमः इति पठन् कूष्माडं छित्त्वा छेदनावसरे तं न विलोकयेत् ॥

कौशिकी रुधिरेणाप्यायतामिति देव्यै तदर्धं निवेद्य अवशिष्टार्धस्य पञ्चभागान् कृत्वा पूतनायै बलिभागं निवेदयामि । चरक्यै बलिभागं निवेदयामि । पापराक्षस्यै बलिभागं निवेदयामि । ततो माषपिष्टपशुं शत्रुं शस्त्रेण छित्त्वा स्कंदाय पशुवधं समर्पयामि विशिखाय पशुवधं समर्पयामि इति समर्प्य शेषं रक्षोभ्यो हरेत् ॥

मंत्रास्तु—ॐ ह्रीं स्फुर स्फुर ॐ फ्रीं ॐ हुं फट् मर्द मर्द हुं इति तच्छेषं बहिर्दद्यात् ।

बलिं गृह्णंत्विमे देवा आदित्या वसवस्तथा ।
मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥
असुरा यातुधानाश्च पिशाचोरगराक्षसाः ।
डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥
जृम्भकासिद्धगंधर्वाः साध्या विद्याधरानगाः ।
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥
जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः ।
मा विघ्नं मा च मे पापं मा संतु परिपंथिनः ॥
सौम्या भवन्तु तृप्तास्ते भूतप्रेताः सुखावहाः ॥

भूतानि यानीह वसंति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम् ॥
अन्यत्र वासं परिकल्पयंतु रक्षंतु मां तानि सदैव चात्र ॥ इति ॥

ततः स्नात्वा कृततिलको देवीं प्रार्थयेत्—

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शङ्खिनी चापिनी बाणभुशुण्डीपरमायुधा ॥ १ ॥
शूलेन पाहिनो देवि पाहि खड्गे न चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥ २ ॥
सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥ ३ ॥

रूपं देहि जयं देहि यशो देहि द्विषो जहि ।
पुत्रान् देहि धनं देहि सर्वान्कामांश्च देहि मे ॥
महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।
आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥
इति प्रार्थयेत् ॥

एतद् बलिदानं होमांगं तच्च होमोत्तरमेव ॥ पूजांगं वैकल्पिकं तत्र च पायसबलिदानमवश्यमेवेति बलिदानविधिः ॥

॥ अथ पुस्तकपूजनं ॥

मूलमंत्रेणाचम्य प्राणानायम्य ॥ ॐ नमः पिशाचिनि करंकिनि त्रिशूलखड्गहस्ते सिंहारूढे एह्येहि आगच्छ आगच्छ इमां पूजां गृह्ण गृह्ण स्वाहा । सप्तशतीरूपिण्यै सरस्वत्यै नमः इति मंत्रेणावाह्य ॐ ह्रीं चण्डिकायै नमः इति मंत्रेण षोडशोपचारैः पूजयेत् ॥

अथ शापोद्धारोत्कीलनमंत्रः ॥

ॐ ह्रीं क्लीं श्रीं क्रां क्रीं चण्डिके देवि शापानुग्रहं कुरु कुरु स्वाहा ॥ इति सप्तवारं शापोद्धारमंत्रं जपित्वा ॐ श्रीं

क्लीं ह्रीं सप्तशति चण्डिके उत्कीलनं कुरु कुरु इत्येकविंशति-वारमुत्कीलनमंत्रं जपेदिति ॥

ततोऽर्थानुसंधानपूर्वकं कवचार्गलकीलकं पठित्वा सप्त-शत्युक्तं रात्रिसूक्तं वेदोक्तं रात्री व्यख्यदायतीति वा पठित्वा नवार्णं जपेत् ॥ तत्र कवचं सार्धपंचपंचाशच्छ्लोकात्मकं कीलकं चतुर्दश श्लोकात्मकं पठेत् ॥

॥ इति पाठक्रमः ॥

# ॥ श्रीदुर्गासप्तशती ॥



## ॥ अथ कवचम् ॥

अस्य श्री चण्डीकवचस्य ब्रह्मा ऋषिः अनुष्टुप्छंदः चामुण्डा देवता अंगन्यासोक्तमातरो बीजं दिग्बंधदेवतास्तत्त्वं श्रीत्रिगुणादेवीप्रीत्यर्थं जपे विनियोगः ॥

॥ ॐ नमश्चण्डिकायै ॥ मार्कण्डेय उवाच ॥

ॐ यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ॥
यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १ ॥

॥ ब्रह्मोवाच ॥

अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ॥
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २ ॥

प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी ॥
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ ३ ॥
पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ॥
सप्तमं कालरात्रिश्च महागौरीति चाष्टमम् ॥ ४ ॥
नवमं सिद्धिदात्री च नवदुर्गाः प्रकीर्तिताः ॥
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ५ ॥
अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे ॥
विषमे दुर्गमे चैव भयार्ताः शरणं गताः ॥ ६ ॥
न तेषां जायते किंचिदशुभं रणसङ्कटे ॥
नापदं तस्य पश्यामि शोकदुःखभयं नहि ॥ ७ ॥
यैस्तु भक्त्या स्मृता नूनं तेषां वृद्धिः प्रजायते ॥
प्रेतसंस्था तु चामुण्डा वाराही महिषासना ॥ ८ ॥
ऐन्द्री गजसमारूढ़ा वैष्णवी गरुडासना ॥
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥ ९ ॥
लक्ष्मीः पद्मासना देवी पद्महस्ता हरिप्रिया ॥
श्वेतरूपधरा देवी ईश्वरी वृषवाहना ॥ १० ॥
ब्राह्मी हंससमारूढा सर्वाभरणभूषिता ॥
इत्येता मातरः सर्वाः सर्वयोगसमन्विताः ॥ ११ ॥

नानाभरणशोभाढ्या नानारत्नोपशोभिताः ॥
दृश्यंते रथमारूढा देव्यः क्रोधसमाकुलाः ॥ १२ ॥
शंखं चक्रं गदां शक्तिं हलं च मुसलायुधम् ॥
खेटकं तोमरं चैव परशुं पाशमेव च ॥ १३ ॥
कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ॥
दैत्यानां देहनाशाय भक्तानामभयाय च ॥ १४ ॥
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥
नमस्तेस्तु महारौद्रे महाघोरपराक्रमे ॥ १५ ॥
महाबले महोत्साहे महाभयविनाशिनि ॥
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥ १६ ॥
प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ॥
दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी ॥ १७ ॥
प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी ॥
उदीच्यां पातु कौबेरी ईशान्यां शूलधारिणी ॥ १८ ॥
ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा ॥
एवं दश दिशो रक्षेच्चामुंडा शववाहना ॥ १९ ॥
जया मे चाग्रतः पातु विजया पातु पृष्ठतः ॥
अजिता वामपार्श्वे तु दक्षिणे चापराजिता ॥ २० ॥

शिखां मे द्योतिनी रक्षेदुमामूर्ध्नि व्यवस्थिता ॥
मालाधरी ललाटे च भ्रुवौरक्षेद्यशस्विनी ॥ २१ ॥
त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके ॥
शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ॥ २२ ॥
कपोलौ कालिका रक्षेत् कर्णमूले तु शाङ्करी ॥
नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ॥ २३ ॥
अधरे चामृतकला जिह्वायां च सरस्वती ॥
दन्तान् रक्षतु कौमारी कण्ठदेशे तु चण्डिका ॥ २४ ॥
घण्टिकां चित्रघण्टा च महामाया च तालुके ॥
कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमङ्गला ॥ २५ ॥
ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी ॥
नीलग्रीवा बहिः कण्ठे नलिकां नलकूबरी ॥ २६ ॥
खड्गधारिण्युभौ स्कन्धौ बाहू मे वज्रधारिणी ॥
हस्तयोर्दंडिनी रक्षेदम्बिका चांगुलीषु च ॥ २७ ॥
नखाञ्छूलेश्वरी रक्षेत् कुक्षौ रक्षेन्नलेश्वरी ॥
स्तनौ रक्षेन्महादेवी मनःशोक विनाशिनी ॥ २८ ॥
हृदये ललिता देवी ह्युदरे शूलधारिणी ॥
नाभौ च कामिनी रक्षेद् गुह्यं गुह्येश्वरी तथा ॥ २९ ॥

भूतनाथा च मेढ्रं मे गुदे महिषवाहिनी ॥
कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी ॥ ३० ॥
जंघे महाबला रक्षेत् सर्वकामप्रदायिनी ॥
गुल्फयोर्नारसिंही च पादौ चामिततेजसी ॥ ३१ ॥
पादांगुलीः श्रीर्मे रक्षेत् पादाधस्तलवासिनी ॥
नखान् दंष्ट्रकराली च केशांश्चैवोर्ध्वकेशिनी ॥ ३२ ॥
रोमकूपेषु कौबेरी त्वचं वागीश्वरी तथा ॥
रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती ॥ ३३ ॥
अंत्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी ॥
पद्मावती पद्मकोशे कफे चूड़ामणिस्तथा ॥ ३४ ॥
ज्वालामुखी नखज्वालामभेद्या सर्वसंधिषु ॥
शुक्रं ब्रह्माणी मे रक्षेच्छायां छत्रेश्वरी तथा ॥ ३५ ॥
अहंकारं मनो बुद्धिं रक्षेन्मे धर्मचारिणी ॥
प्राणापानौ तथा व्यानमुदानं च समानकम् ॥ ३६ ॥
वज्रहस्ता च मे रक्षेत् प्राणकल्पं च शोभनम् ॥
रसे रूपे च गन्धे च शब्दे स्पर्शे च योगिनी ॥ ३७ ॥
सत्त्वं रजस्तमश्चैव रक्षेन्नारायणी सदा ॥
आयू रक्षतु वाराही धर्मं रक्षतु वैष्णवी ॥ ३८ ॥

यशः कीर्तिं च लक्ष्मीं च सदा रक्षंतु मातरः ॥
गोत्रमिंद्राणी मे रक्षेत् पशून्मे रक्ष चण्डिके ॥ ३९ ॥
पुत्रान् रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी ॥
पंथानं सुपथा रक्षेन्मार्गं क्षेमकरी तथा ॥ ४० ॥
राजद्वारे महालक्ष्मीर्विजया सर्वतः स्थिता ॥
रक्षाहीनं तु यत् स्थानं वर्जितं कवचेन तु ॥ ४१ ॥
तत्सर्वं रक्ष मे देवि जयंती पापनाशिनी ॥
पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः ॥ ४२ ॥
कवचेनावृतो नित्यं यत्र यत्राधिगच्छति ॥
तत्र तत्रार्थलाभश्च विजयः सार्वकामिकः ॥ ४३ ॥
यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ॥
परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् ॥ ४४ ॥
निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ॥
त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् ॥ ४५ ॥
इदं तु देव्याः कवचं देवानामपि दुर्लभम् ॥
यः पठेत्प्रयतो नित्यं त्रिसंध्यं श्रद्धयान्वितः ॥ ४६ ॥
दैवी कला भवेत्तस्य त्रैलोक्येष्वपराजितः ॥
जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥ ४७ ॥

नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः ॥
स्थावरं जङ्गमं चैव कृत्रिमं चापि यद्विषम् ॥ ४८ ॥
अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ॥
भूचराः खेचराश्चैव जलजाश्चौपदेशिकाः ॥ ४९ ॥
सहजा कुलजा माला शाकिनी डाकिनी तथा ॥
अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः ॥ ५० ॥
ग्रहभूतपिशाचाश्च यक्षगंधर्वराक्षसाः ॥
ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः ॥ ५१ ॥
नश्यंति दर्शनात्तस्य कवचं हृदि संस्थिते ॥
मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरं परम् ॥ ५२ ॥
यशसा वर्धते सोऽपि कीर्तिमण्डितभूतले ॥
जपेत् सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा ॥ ५३ ॥
यावद्भूमण्डलं धत्ते सशैलवनकाननम् ॥
तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिकी ॥ ५४ ॥
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥
प्राप्नोति पुरुषो नित्यं महामाया प्रसादतः ॥ ५५ ॥

इति श्रीवाराहपुराणे हरिहरब्रह्मप्रणीतं
देव्याः कवचं समाप्तम् ॥

## ॥ अथार्गलास्तुतिः ॥

अस्य श्रीअर्गलास्तोत्रमंत्रस्य विष्णुर्ऋषिः अनुष्टुप् छंदः श्रीमहालक्ष्मीर्देवता श्रीजगदंबाप्रीत्यर्थे जपे विनियोगः ॥

॥ ॐ नमश्चण्डिकायै ॥ मार्कण्डेय उवाच ॥

जयन्ती मङ्गला काली भद्रकाली कपालिनी ॥
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तुते ॥ १ ॥
मधुकैटभविद्रावि विधातृ वरदे नमः ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २ ॥
महिषासुरनिर्नाशि विधातृवरदे नमः ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ३ ॥
रक्तबीज बधे देवि चण्डमुण्डविनाशिनी ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ४ ॥
शुंभस्यैव निशुंभस्य धूम्राक्षस्य च मर्दिनो ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ५ ॥
वंदितांघ्रियुगे देवि सर्वसौभाग्यदायिनी ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ६ ॥

अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ७ ॥
न तेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ८ ॥
स्तुवद्भ्यो भक्तिपूर्वं त्वां चंडिके व्याधिनाशिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ९ ॥
चंडिके सततं ये त्वामर्चयंतीह भक्तितः ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १० ॥
देहि सौभाग्यमारोग्यं देहि देवि परं सुखम् ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ११ ॥
विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १२ ॥
विधेहि देवि कल्याणं विधेहि परमां श्रियम् ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १३ ॥
विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १४ ॥
प्रचंडदैत्यदर्पघ्ने चण्डिके प्रणताय मे ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १५ ॥

चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १६ ॥
कृष्णेन संस्तुते देवि शश्वद्भक्त्या त्वमम्बिके ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १७ ॥
हिमाचलसुतानाथसंस्तुते परमेश्वरि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १८ ॥
सुरासुरशिरोरत्ननिघृष्टचरणेऽम्बिके ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १९ ॥
इन्द्राणीपतिसद्भावपूजिते परमेश्वरि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २० ॥
देवि प्रचण्डदोर्दण्डदैत्यदर्पविनाशिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २१ ॥
पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २२ ॥
देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बिके ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २३ ॥
पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ॥
तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥ २४ ॥

इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः ॥
स तु सप्तशतीसंख्यावरमाप्नोति संपदाम् ॥ २५ ॥

॥ इति मार्कण्डेयपुराणे अर्गलास्तोत्रं सम्पूर्णम् ॥

---

# ॥ अथ कीलकम् ॥

अस्य श्रीकीलकमंत्रस्य शिव ऋषिः अनुष्टुप् छन्दः श्रीमहासरस्वती देवता श्रीजगदम्बाप्रीत्यर्थे जपे विनियोगः ॥

॥ ॐ नमश्चण्डिकायै ॥ मार्कण्डेय उवाच ॥

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ॥
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥
सर्वमेतद्विना यस्तु मन्त्राणामपि कीलकम् ॥
सोऽपि क्षेममवाप्नोति सततं जाप्यतत्परः ॥ २ ॥
सिद्ध्यन्त्युच्चटानादीनि वस्तूनि सकलान्यपि ॥
एतेन स्तुवतां नित्यं स्तोत्रमात्रेण सिद्ध्यति ॥ ३ ॥
न मन्त्रो नौषधं तत्र न किञ्चिदपि विद्यते ॥
विना जाप्येन सिद्ध्येत सर्वमुच्चाटनादिकम् ॥ ४ ॥

समग्राण्यपि सिध्यन्ति लोकशङ्कामिमां हरः ॥
कृत्वा निमन्त्रयामास सर्वमेवमिदं शुभम् ॥ ५ ॥
स्तोत्रं वै चण्डिकायास्तु तच्च गुह्यं चकार सः ॥
समाप्नोति स पुण्येन तां यथावन्नियन्त्रणाम् ॥ ६ ॥
सोपि क्षेममवाप्नोति सर्वमेव न संशयः ॥
कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥ ७ ॥
ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति ॥
इत्थं रूपेण कीलेन महादेवेन कीलितम् ॥ ८ ॥
यो निष्कीलां विधायैनां नित्यं जपति सुस्फुटम् ॥
स सिद्धः स गणः सोऽपि गन्धर्वो जायते नरः ॥ ९ ॥
न चैवाप्यटतस्तस्य भयं क्वापि हि जायते ॥
नापमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ॥ १० ॥
ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति ॥
ततो ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते बुधैः ॥ ११ ॥
सौभाग्यादि च यत्किञ्चिद् दृश्यते ललनाजने ॥
तत्सर्वं त्वत्प्रसादेन तेन जाप्यमिदं शुभम् ॥ १२ ॥
शनैस्तु जप्यमानेऽस्मिन् स्तोत्रे सम्पत्तिरुच्चकैः ॥
भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ॥ १३ ॥

ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसम्पदः ॥
शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ॥ १४ ॥

❀ इति श्रीभगवत्याः कीलकस्तोत्रं समाप्तम् ❀

---

# ॥ अथ नवार्णमंत्रम् ॥

ॐ अस्य श्रीनवार्णमन्त्रस्य । ब्रह्मविष्णुमहेश्वरा ऋषयः । गायत्र्युष्णिगनुष्टुप्छन्दांसि । श्रीमहाकालीमहालक्ष्मी-महासरस्वत्यो देवताः । नन्दाशाकम्भरीभीमाः शक्तयः । रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि । अग्निवायुसूर्यास्तत्त्वानि । सप्तशतीपाठांगत्वेन नवार्णमन्त्रजपे विनियोगः ॥

ॐ ब्रह्मविष्णुमहेश्वरऋषिभ्यो नमः शिरसि ॥
ॐ गायत्र्युष्णिगनुष्टुप्छन्दोभ्यो नमः मुखे ॥
ॐ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवताभ्यो नमः हृदये ॥
ॐ नन्दाशाकम्भरीभीमाशक्तिभ्यो नमः दक्षिणस्तने ॥

ॐ रक्तदन्तिकादुर्गाभ्रामरीबीजेभ्यो नमः वामस्तने ॥

ॐ अग्निवायुसूर्यतत्त्वेभ्यो नमः नाभौ ॥

इति ऋष्यादिन्यासः ॥ ॥ मूलेन करौ संशोध्य ॥

## ॥ अथ एकादशन्यासाः ॥

तत्रादौ प्राथमिकंदेवसारूप्यप्रदं मातृकान्यासं कृत्वा ॥ १ ॥ द्वितीयं सारस्वताभिधं कुर्यात् ॥

### ॥ मातृकान्यासः ॥

ॐ अंनमो ललाटे ॥ ॐ आंनमो मुखवृत्ते ॥

ॐ इंनमो दक्षिणनेत्रे ॥ ॐ ईंनमो वामनेत्रे ॥

ॐ उंनमो दक्षिणकर्णे ॥ ॐ ऊंनमो वामकर्णे ॥

ॐ ऋंनमो दक्षिणनसि ॥ ॐ ॠंनमो वामनसि ॥

ॐ ऌंनमो दक्षिणगंडे ॥ ॐ ॡंनमो वामगंडे ॥

ॐ एंनमः ऊर्ध्वोष्ठे ॥ ॐ ऐंनमोऽधरोष्ठे ॥

ॐ ओंनमः ऊर्ध्वदंतपंक्तौ ॥ ॐ औंनमोऽधोदंतपंक्तौ ॥

ॐ अंनमः शिरसि ॥ ॐ अःनमो मुखे ॥

ॐ कंनमो दक्षबाहुमूले ॥ ॐ खंनमो दक्षकूर्परे ॥
ॐ गंनमो दक्षमणिबंधे ॥ ॐ घंनमो दक्षांगुलिमूले ॥
ॐ ङंनमो दक्षांगुल्यग्रे ॥ ॐ चंनमो वामबाहुमूले ॥
ॐ छंनमो वामकूर्परे ॥ ॐ जंनमो वाममणिबंधे ॥
ॐ झंनमो वामांगुलिमूले ॥ ॐ ञंनमो वामांगुल्यग्रे ॥
ॐ टंनमो दक्षपादमूले ॥ ॐ ठंनमो दक्षजानुनि ॥
ॐ डं नमो दक्षगुल्फे ॥ ॐ ढंनमो दक्षपादांगुलिमूले ॥
ॐ णंनमो दक्षपादांगुल्यग्रे ॥ ॐ तंनमो वामपादमूले ॥
ॐ थंनमो वामजानुनि ॥ ॐ दंनमो वामगुल्फे ॥
ॐ धंनमो वामपादांगुलिमूले ॥ ॐ नंनमो वामपादांगुल्यग्रे ॥
ॐ पंनमो दक्षपार्श्वे ॥ ॐ फंनमो वामपार्श्वे ॥
ॐ बंनमः पृष्ठे ॥ ॐ भंनमो नाभौ ॥
ॐ मंनमो जठरे ॥ ॐ यंनमो हृदि ॥
ॐ रंनमो दक्षांसे ॥ ॐ लंनमः ककुदि ॥
ॐ वंनमो वामांसे ॥ ॐ शंनमो हृदादिदक्षहस्तान्ते ॥
ॐ षंनमो हृदादिवामहस्तांते ॥ ॐ संनमो हृदादिदक्षपादांते ॥
ॐ हंनमो हृदादिवामपादान्ते ॥ ळंनमो जठरे ॥ ॐ क्षंनमो मुखे ॥

इति मात्रिकान्यासो देवसारूप्यप्रदः प्रथमः ॥

ॐ ऐं ह्रीं क्लीं नमः कनिष्ठिकयोः ॥

ॐ ऐं ह्रीं क्लीं नमः अनामिकयोः ॥

ॐ ऐं ह्रीं क्लीं नमः मध्यमयोः ॥

ॐ ऐं ह्रीं क्लीं नमः तर्जन्योः ॥

ॐ ऐं ह्रीं क्लीं नमः अंगुष्ठयोः ॥

ॐ ऐं ह्रीं क्लीं नमः करमध्ये ॥

ॐ ऐं ह्रीं क्लीं नमः करपृष्ठे ॥

ॐ ऐं ह्रीं क्लीं नमः मणिबन्धयोः ॥

ॐ ऐं ह्रीं क्लीं नमः कूर्परयोः ॥

ॐ ऐं ह्रीं क्लीं नमः हृदयाय नमः

ॐ ऐं ह्रीं क्लीं नमः शिरसे स्वाहा ॥

ॐ ऐं ह्रीं क्लीं नमः शिखायै वषट् ॥

ॐ ऐं ह्रीं क्लीं नमः कवचाय हुं ॥

ॐ ऐं ह्रीं क्लीं नमो नेत्रत्रयाय वौषट् ॥

ॐ ऐं ह्रीं क्लीं नमोऽस्त्राय फट् ॥

॥ इति सारस्वताभिधो जाड्यविनाशको द्वितीयः ॥ २ ॥

ॐ ह्रीं ब्राह्मी पूर्वस्यां मां पातु ।

ॐ ह्रीं माहेश्वरी आग्नेय्यां मां पातु ।

ॐ ह्लीं कौमारी दक्षिणस्यां मां पातु ।

ॐ ह्लीं वैष्णवी नैर्ऋत्यां . मां पातु ।

ॐ ह्लीं वाराही पश्चिमायां मां पातु ।

ॐ ह्लीं इन्द्राणी वायव्यां मां पातु ।

ॐ ह्लीं चामुण्डा उत्तरस्यां मां पातु ।

ॐ ह्लीं महालक्ष्मीरैशान्यां मां पातु ।

ॐ ह्लीं व्योमेश्वरी ऊर्ध्वं मां पातु ।

ॐ ह्लीं सप्तद्वीपेश्वरी भूमौ मां पातु ।

ॐ ह्लीं कामेश्वरी पाताले मां पातु ।

इति त्रैलोक्यविजयप्रदो मातृगणन्यासस्तृतीयः ॥ ३ ॥

ॐ कमलांकुशमंडिता नन्दजा पूर्वांगं मे पातु ।

खड्गपात्रधरा रक्तदन्तिका दक्षिणांगं मे पातु ।

पुष्पपल्लवसंयुता शाकंभरी पश्चिमांगं मे पातु ।

धनुर्बाणकरा दुर्गा वामांगं मे पातु ।

शिरः पात्रकरा भीमा मस्तकाच्चरणावधि मां पातु ।

चित्रकांतिभृद्भ्रामरी पादादि मस्तकांतं मे पातु ।

इति नन्दजादि न्यासो जरामृत्युहरश्चतुर्थः ॥ ४ ॥

पादादिनाभिपर्यंतं ब्रह्मा मां पातु ।
नाभेर्विशुद्धिपर्यंतं जनार्दनो मां पातु ।
विशुद्धेर्ब्रह्मरंध्रांतं रुद्रो मां पातु ।
हंसो मे पदद्वय पातु । वैनतेयः करद्वयं मे पातु ।
वृषभः चक्षुषी मे पातु ।
गजाननः सर्वांगं मे पातु ।
आनन्दमयो हरिः परापरौ देहभागौ मे पातु ॥
॥ इति सर्वकामप्रदो ब्रम्हादिन्यासः पञ्चमः ॥ ५ ॥
अष्टादशभुजा महालक्ष्मीर्मध्यभागं मे पातु ।
अष्टभुजा महासरस्वती ऊर्ध्वभागं मे पातु ।
दशभुजा महाकाली अधोभागं मे पातु ।
सिंहो हस्तद्वयं मे पातु ।
हंसोऽक्षियुगं मे पातु ।
महिषारूढो यमः पदद्वयं मे पातु ।
महेशश्चण्डिकायुक्तः सर्वांगं मे पातु ॥
॥ इति सद्गतिप्रदो महालक्ष्म्यादिन्यासः षष्ठः ॥ ६ ॥
ॐ ऐं नमः ब्रह्मरन्ध्रे ॥ ॐ ह्रीं नमः दक्षनेत्रे ॥
ॐ क्लीं नमः वामनेत्रे ॥ ॐ चां नमः दक्षकर्णे ॥

ॐ मुं नमः वामकर्णे ॥ ॐ डां नमः दक्षनासापुटे ॥
ॐ यैं नमः वामनासापुटे ॥ ॐ विं नमः मुखे ॥
ॐ च्चें नमः गुह्ये ॥

॥ इति मूलाक्षरादिन्यासो रोगक्षयकरः सप्तमः ॥ ७ ॥

ॐ च्चें नमो गुह्ये ॥ ॐ विं नमो मुखे ॥
ॐ यैं नमो वामनासापुटे ॥ ॐ डां नमो दक्षनासापुटे ॥
ॐ मुं नमो वामकर्णे ॥ ॐ चां नमो दक्षकर्णे ॥
ॐ क्लीं नमो वामनेत्रे ॥ ॐ ह्रीं नमो दक्षनेत्रे ॥
ॐ ऐं नमो ब्रह्मरन्ध्रे ॥

॥ इति विलोमाक्षरन्यासः सर्वदुःखनाशकोऽष्टमः ॥ ८ ॥

मूलमुच्चार्य मस्तकाच्चरणांतं चरणान्मस्तकांतं व्यापक-मष्टवारं कुर्यात् ॥ यथा—

प्रथमं पुरतो मूलेन मस्तकाच्चरणावधि ॥ १ ॥ ततश्च-रणान्मस्तकावधिमूलोच्चारेण व्यापकम् ॥ २ ॥ एवं दक्षिणतः पश्चाद्वामभागे चेति प्रतिदिग्भागेऽनुलोमविलोमतया रिति अष्टवारं व्यापकं भवति ॥

॥ इति देवताप्राप्तिकरो मूलव्यापकन्यासो नवमः ॥९॥

ॐ ऐं ह्रीं क्लीं हृदयाय नमः ॥

एवं प्रत्येकमंगं मूलमुच्चार्य षडंगेषु न्यसेदिति

त्रैलोक्यवशकरो मूलषडंगन्यासो दशमः ॥ १० ॥

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥

शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ॥ १ ॥

सौम्या सौम्यतरा शेषसौम्येभ्यस्त्वतिसुन्दरी ॥

परापराणां परमा त्वमेव परमेश्वरी ॥ २ ॥

यच्च किंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ॥

तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ॥ ३ ॥

यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ॥

सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ ४ ॥

विष्णुः शरीरग्रहणमहमीशान एव च ॥

कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत् ॥५॥

आद्यं वाग्बीजं कृष्णतरं ध्यात्वा सर्वांगे विन्यसामि ॥

॥ इति सर्वांगे न्यसेत् ॥

शूलेन पाहि नो देवि पाहि खड्गेन चांबिके ॥

घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥ १ ॥

प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ॥
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ २ ॥
सौम्यानि यानि रूपाणि त्रैलोक्ये विचरंति ते ॥
यानि चात्यंतघोराणि तै रक्षास्मांस्तथा भुवम् ॥ ३ ॥
खड्गशूलगदादीनि यानि चास्त्राणि तेम्बिके ॥
करपल्लवसंगीनि तैरस्मान्रक्ष सर्वतः ॥ ४ ॥

॥ इति द्वितीयं मायाबीजं सूर्यसदृशं ध्यात्वा सर्वांगे विन्यसेत् ॥

सर्वस्वरूपे सर्वेशे सर्वशक्ति समन्विते ॥
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोस्तु ते ॥ १ ॥
एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ॥
पातु नः सर्वभूतेभ्यः कात्यायनि नमोस्तु ते ॥ २ ॥
ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ॥
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोस्तु ते ॥ ३ ॥
हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ॥
सा घण्टा पातु नो देवि पापेभ्यो नः सुतानिव ॥ ४ ॥
असुरासृग्वसापंकचर्चितस्ते करोज्ज्वलः ॥
शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ॥ ५ ॥

॥ तृतीयं कामबीजं स्फटिकाभं ध्यात्वा सर्वांगे विन्यसामि ॥
इति सर्वांगे विन्यसेत् ॥ इति सूक्तादिबीजत्रयन्यासः ॥
पञ्चमः सर्वानिष्टहरः सर्वाभीष्टदःसर्वरक्षाकरश्चैकादशः ॥११॥
पुनः षडंगन्यासं कुर्यात् ॥ स यथा—
ॐ ऐं हृदयाय नमः ॥ ॐ ह्रीं शिरसे नमः ॥
ॐ क्लीं शिखायै वषट् ॥ ॐ चामुंडायै कवचाय हुँ ॥
ॐ विच्चे नेत्रत्रयाय वौषट् ॥
ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट् ॥

॥ अथाक्षरन्यासः ॥

ॐ ऐं नमः शिखायां ॥ ॐ ह्रीं नमः दक्षनेत्रे ॥
ॐ क्लीं नमः वामनेत्रे ॥ ॐ चां नमः दक्षकर्णे ॥
ॐ मुं नमः वामकर्णे ॥ ॐ डां नमः दक्षनासापुटे ॥
ॐ यैं नमः वामनासापुटे ॥ ॐ विं नमः मुखे ॥
ॐ च्चें नमः गुह्ये ॥
समस्तमंत्रमुच्चार्याष्टवारं व्यापकं पूर्ववच्चरेत् ॥
ॐ ऐं प्राच्यै नमः ॥ ॐ ऐं आग्नेयै नमः ॥
ॐ ह्रीं दक्षिणायै नमः ॥ ॐ ह्रीं नैर्ऋत्यै नमः ॥
ॐ क्लीं प्रतीच्यै नमः ॥ ॐ क्लीं वायव्यै नमः ॥

ॐ चामुंडायै उदीच्यै नमः ॥ ॐ विच्चे ईशान्यै नमः ॥
ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे ऊर्ध्वायै नमः ॥
ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे भूम्यै नमः ॥

## ॥ अथ देवी ध्यानम् ॥

खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुशुण्डीं शिरः
शंखं संदधतीं करैस्त्रिनयनां सर्वांगभूषावृताम् ॥
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां
यामस्तौत्स्वपिते हरौ कमलजो हंतुं मधुं कैटभम् ॥ १ ॥

अक्षस्रक्परशू गदेषुकुलिशं पद्मं धनुः कुण्डिकां
दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ॥
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां
सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ २ ॥

घण्टाशूलहलानि शंखमुसले चक्रं धनुः सायकं
हस्ताब्जैर्दधतीं घनांतविलसच्छीतांशुतुल्यप्रभाम् ॥
गौरीदेहसमुद्भवां त्रिनयनामाधारभूतां
महापूर्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम् ॥ ३ ॥

एवं देवीं ध्यात्वा मानसोपचारैः संपूज्य मालां प्रार्थयेत् ॥

ॐ महामाले महामाये सर्वशक्तिस्वरूपिणि ॥
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥

इति मंत्रेण मालां प्रार्थ्य ॐ सिद्ध्यै नमः इति मालां नत्वा जपेत् ।

( मंत्रार्थः ॥ महासरस्वत्यादिरूपे चित्सदानन्दमये चण्डिके त्वां ब्रह्मविद्याप्राप्त्यर्थं वयं सर्वदा ध्यायामः । )

इति मंत्रार्थानुसंधानपूर्वकमष्टोत्तरशतं १०८ सहस्रं वा नवार्णमंत्रं जपेत् ॥ जपांते गुह्येत्यादिना जपं समाप्य सप्तशतीं पठेत् ॥ ततो रात्रिसूक्तं पठेत् ॥ तत्रादौ ऋग्वेदोक्तं रात्रिसूक्तं यथा—

रात्रीव्यख्यदिति सूक्तस्य कुशिक ऋषिः रात्रिर्देवता गायत्री छन्दः श्रीजगदम्बाप्रीत्यर्थे जपे विनियोगः ॥

ॐ रात्रीव्यख्यदायतीपुरुत्रादेव्य १ क्षभिः ॥
विश्वाअधिश्रियोधित ॥ ओर्वप्रा अमर्त्यानिवतोदेव्यु १द्वतः ॥
ज्योतिषाबाधतेतमः ॥ निरुस्वसारमस्कृतोषसं देव्यायती ॥

अपेदुहासतेतमः ॥ सानो अद्ययस्यावयंनिते यामंनविद्महि।
वृक्षेनवसतिंवयः ॥ निग्रामा सोअविक्षतनिपद्वंतोनि-
पक्षिणः ॥ निश्येना सश्चिदर्थिनः ॥ यावया-
वृक्यं १ वृकंयवयस्तेनमूर्म्ये ॥ अथानः सुतराभव ॥
उपमापेपिशत्तमः कृष्णंव्यक्तमस्थित ॥ उषऋणे-
वयातया ॥ उपते गाइवाकरं वृणीष्वदुहितर्दिवः ॥
रात्रिस्तोमंन जिग्युषे ॥ १ ॥

इति ऋग्वेदोक्तं रात्रिसूक्तम् ॥

## ॥ अथ तंत्रोक्तं रात्रिसूक्तम् ॥

विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ॥
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥ १ ॥

॥ ब्रह्मोवाच ॥

त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ॥
सुधा त्वमक्षरे नित्या त्रिधामात्रात्मिका स्थिता ॥ २ ॥

अर्धमात्रा स्थिता नित्या यामुच्चार्या विशेषतः ॥
त्वमेव सन्ध्या सावित्री त्वं देवि जननी परा ॥ ३ ॥
त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ॥
त्वयैतत्पाल्यते देवि त्वमत्स्यंते च सर्वदा ॥ ४ ॥
विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ॥
तथा संहृतिरूपांते जगतोऽस्य जगन्मये ॥ ५ ॥
महाविद्या महामाया महामेधा महास्मृतिः ॥
महामोहा च भवती महादेवी महेश्वरी ॥ ६ ॥
प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनि ॥
कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥ ७ ॥
त्वं श्रीस्त्वमीश्वरीस्त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ॥
लज्जापुष्टिस्तथा तुष्टिस्त्वं शांतिः क्षांतिरेव च ॥ ८ ॥
खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥
शंखिनी चापिनी बाणाभुशुण्डीपरिघायुधा ॥ ९ ॥
सौम्या सौम्यतरा शेषसौम्येभ्यस्त्वतिसुन्दरी ॥
परापराणां परमा त्वमेव परमेश्वरी ॥ १० ॥
यच्च किंचित् क्वचिद्वस्तु सदसद्वाखिलात्मिके ॥
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ॥११॥

यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ॥
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ १२॥

विष्णुः शरीरग्रहणमहमीशान एव च ॥
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत् ॥१३॥

सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ॥
मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ १४ ॥

प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ॥
बोधश्च क्रियतामस्य हंतुमेतौ महासुरौ ॥ १५ ॥

॥ इति तंत्रोक्तं रात्रिसूक्तम् ॥

एतेषां श्रीप्रथममध्यमोत्तमचरित्राणां ब्रह्मविष्णुरुद्रा ऋषयः ॥ गायत्र्युष्णिगनुष्टुप्छदांसि ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः॥ नन्दाशाकम्भरीभीमाः शक्तयः ॥ रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि ॥ अग्निवायुसूर्यास्तत्त्वानि ॥ ऋग्यजुःसामवेदा ध्यानानि ॥ चतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीमहाकालीमहालक्ष्मीमहासरस्वतीप्रीत्यर्थं च सप्तशतीजपे विनियोगः ॥

## ।। तन्त्रादौ न्यासः ।।

ॐ ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि ।।

ॐ गायत्र्युष्णिगनुष्टुप्छंदोभ्यो नमः मुखे ।।

ॐ महाकालीमहालक्ष्मीमहासरस्वतीदेवताभ्यो नमः हृदये ।

ॐ ऐं ह्रीं क्लीं बीजेभ्यो नमः गुह्ये ।।

ॐ अग्निवायुसूर्यतत्त्वेभ्यो नमः पादयोः ।।

ॐ ह्रीं हृदयाय नमः । ॐ चं शिरसे स्वाहा ।।

ॐ डिं शिखायै वषट् ।। ॐ कां कवचाय हुं ।।

ॐ यैं नेत्रत्रयाय वौषट् ।। ॐ ह्रीं चण्डिकायै अस्त्राय फट्।।

## ।। अथ चक्रन्यासः ।।

ॐ शंभुतेजोज्वलज्ज्वालामालिनिपावके
हां नन्दायै अंगुष्ठाभ्यां नमः ।।

ॐ शंभुतेजोज्वलज्ज्वालामालिनी पावके
ह्रीं रक्तदन्तिकायै तर्जनीभ्यां नमः ।।

ॐ शंभुतेजोज्वलज्ज्वालामालिनि पावके
हूं शाकंभर्यै मध्यमाभ्यां नमः ।।

ॐ शंभुतेजोज्वलज्ज्वालामालिनि पावके
हैं दुर्गायै अनामिकाभ्यां नमः ।।

ॐ शंभुतेजोज्वलज्ज्वालामालिनि पावके
हौं भीमायै कनिष्ठिकाभ्यां नमः ॥
ॐ शंभुतेजोज्वलज्ज्वालामालिनि पावके
ह्रः भ्रामर्यै करतलकरपृष्ठाभ्यां नमः ॥ अस्त्राय फट् ॥
एवं हृदयादिषडंगन्यासः ॥

॥ अथांगन्यासः ॥

ॐ वाराह्यै नमः पादयोः ॥ ॐ नारसिंह्यै नमः नितम्बे ॥
ॐ चामुण्डायै नमः नाभौ ॥ ॐ माहेंद्र्यै नमः कण्ठे ॥
ॐ ब्राह्म्यै नमः पृष्ठे ॥ ॐ वैष्णव्यै नमः दक्षिणभुजे ॥
ॐ माहेश्वर्यै नमः वामभुजे ॥ ॐ कौमार्यै नमः स्कन्धयोः ॥
ॐ कात्यायन्यै नमः मुखे ॥ ॐ शिवदूत्यै नमः शिरसि ॥
ॐ शिवायै नमः हृदि ॥ ॐ काल्यै नमः दक्षिणकुक्षौ ॥
ॐ रक्तदंतिकायै नमः वामकुक्षौ ॥ ॐ शताक्ष्यै नमः पृष्ठवंशे ॥
ॐ शाकंभर्यै नमः भ्रुवोः ॥

ॐ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शंखिनी चापिनी बाणभुशुण्डीपरिघायुधा शिरसि ॥
ॐ शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च मुखे ॥

ॐ प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरी कण्ठे ॥
ॐ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरंति ते।
यानि चात्यर्थघोराणि तै रक्षास्मांस्तथा भुवम् बाह्वोः॥
ॐ खड्गशूलगदादीनि यानि चास्त्राणि तेम्बिके।
करपल्लवसङ्गीनि तैरस्मान्रक्ष सर्वतः हृदये ॥
ॐ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते उदरे॥
ॐ एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ।
पातु नः सर्वभूतेभ्यः कात्यायनि नमोऽस्तु ते नाभौ॥
ॐ ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ।
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ऊर्वोः॥
ॐ हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ।
सा घण्टा पातु नो देवि पापेभ्यो नः सुतानिव जान्वोः॥
ॐ असुरासृग्वसापंकचर्चितस्ते करोज्ज्वलः ।
शुभाय खड्गो भवतु चंडिके त्वां नता वयम् पादयोः॥
॥ एवं न्यस्तशरीरः साधकः सच्चिदानंदरूपिणीं ध्यायेत् ॥

॥ अथ ध्यानम् ॥

विद्युद्दामसमप्रभां मृगपतिस्कंन्धस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ।
हस्तैश्चक्रधरालिखेटविशिखांश्चापं गुणं तर्जनीं ।
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥ १ ॥

॥ इति ध्यानम् ॥



# ॥ अथ प्रंथमचरित्रम् ॥

प्रथमचरित्रस्य ब्रह्मा ऋषिः ॥ महाकाली देवता ॥ गायत्री छन्दः ॥ नन्दा शक्तिः ॥ रक्तदन्तिका बीजं ॥ अग्निस्तत्त्वं ॥ ऋग्वेदः स्वरूपं ॥ श्रीमहाकालीप्रीत्यर्थं प्रथमचरित्रजपे विनियोग ॥

खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुण्डीं शिरः
शंखं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां
यामस्तौत्स्वपिते हरौ कमलजो हंतुं मधुंकैटभम् ॥

॥ ॐ नमश्चण्डिकायै ॥

॥ ॐ ऐं मार्कण्डेय उवाच ॥ १ ॥

सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः ॥
निशामय तदुत्पत्तिं विस्तराद्गदतो मम ॥ २ ॥
महामायानुभावेन यथा मन्वंतराधिपः ॥
स बभूव महाभागः सावर्णिस्तनयो रवेः ॥ ३ ॥

स्वारोचिषेंतरे पूर्वं चैत्रवंशसमुद्भवः ॥
सुरथो नाम राजाभूत्समस्ते क्षितिमण्डले ॥ ४ ॥
तस्य पालयतः सम्यक् प्रजाः पुत्रानिवौरसान् ॥
बभूवुः शत्रवो भूपाः कोलाविध्वंसिनस्तदा ॥ ५ ॥
तस्य तैरभवद्युद्धमतिप्रबलदण्डिनः ॥
न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्जितः ॥ ६ ॥
ततः स्वपुरमायातो निजदेशाधिपोऽभवत् ॥
आक्रांतस्स महाभागस्तैस्तदा प्रबलारिभि ॥ ७ ॥
अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्य दुरात्मभिः ॥
कोशो बलं चापहृतं तत्रापि स्वपुरे ततः ॥ ८ ॥
ततो मृगयाव्याजेन हृतस्वाम्यस्स भूपतिः ॥
एकाकी हयमारुह्य जगाम गहनं वनम् ॥ ९ ॥
स तत्राश्रममद्राक्षीद्द्विजवर्यस्य मेधसः ॥
प्रशांतः श्वापदाकीर्णं मुनिशिष्योपशोभितम् ॥ १० ॥
तस्थौ कञ्चित्स कालं च मुनिना तेन सत्कृतः ॥
इतश्चेतश्च विचरंस्तस्मिन् मुनिवराश्रमे ॥ ११ ॥
सोऽचिंतयत्तदा तत्र ममत्वाकृष्टमानसः ॥ १२ ॥
मत्पूर्वैः पालितं पूर्वं मया हीनं पुरं हि तत् ॥

मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतः पाल्यते न वा ॥ १३ ॥
न जाने स प्रधानो मे शूरो हस्ती सदामदः ॥
मम वैरिवशं यातः कान् भोगानुपलप्स्यते ॥ १४ ॥
ये ममानुगता नित्यं प्रसादधनभोजनैः ॥
अनुवृत्तिं ध्रुवं तेऽद्य कुर्वंत्यन्यमहीभृताम् ॥ १५ ॥
असम्यग्व्ययशीलैस्तैः कुर्वद्भिः सततं व्ययम् ॥
संचितः सोऽतिदुःखेन क्षयं कोशो गमिष्यति ॥ १६ ॥
एतच्चान्यच्च सततं चिंतयामास पार्थिवः ॥
तत्र विप्राश्रमाभ्याशे वैश्यमेकं ददर्श सः ॥ १७ ॥
स पृष्टस्तेन कस्त्वं भो हेतुश्चागमनेऽत्र कः ॥
सशोक इव कस्मात्त्वं दुर्मना इव लक्ष्यसे ॥ १८ ॥
इत्याकर्ण्य वचस्तस्य भूपतेः प्रणयोदितम् ॥
प्रत्युवाच स तं वैश्यः प्रश्रयावनतो नृपम् ॥ १९ ॥

॥ वैश्य उवाच ॥ २० ॥

समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले ॥
पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः ॥ २१ ॥
विहीनश्च धनैर्दारैः पुत्रैरादाय मे धनम् ॥
वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः ॥ २२ ॥

सोऽहं न वेद्मि पुत्राणां कुशलाकुशलात्मिकाम् ॥
प्रवृत्तिं स्वजनानां च दाराणां चात्र संस्थितः ॥ २३ ॥
किं नु तेषां गृहे क्षेममक्षेमं किं नु सांप्रतम् ॥ २४ ॥
कथं ते किं नु सद्वृत्ता दुर्वृत्ताः किं नु मे सुताः ॥ २५ ॥

राजोवाच ॥ २६ ॥

यैर्निरस्तो भवाँल्लुब्धैः पुत्रदारादिभिर्धनैः ॥ २७ ॥
तेषु किं भवतः स्नेहमनुबध्नाति मानसम् ॥ २८ ॥

॥ वैश्य उवाच ॥ २९ ॥

एवमेतद्यथा प्राह भवानस्मद्गतं वचः ॥
किं करोमि न बध्नाति मम निष्ठुरतां मनः ॥ ३० ॥
यैः संत्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः ॥
पतिः स्वजनहार्दं च हार्दितेष्वेव मे मनः ॥ ३१ ॥
किमेतन्नाभिजानामि जानन्नपि महामते ॥
यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बंधुषु ॥ ३२ ॥
तेषां कृते मे निःश्वासो दौर्मनस्यं च जायते ॥ ३३ ॥
करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरम् ॥ ३४ ॥

॥ मार्कंडेय उवाच ॥ ३५ ॥

ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ ॥ ३६ ॥
समाधिर्नाम वैश्योऽसौ स च पार्थिवसत्तमः ॥ ३७ ॥
कृत्वा तु तौ यथान्यायं यथार्हं तेन संविदम् ॥
उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥ ३८ ॥

॥ राजोवाच ॥ ३९ ॥

भगवंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत् ॥ ४० ॥
दुःखाय यन्मे मनसः स्वचित्तायत्ततां विना ॥ ४१ ॥
ममत्वं गतराज्यस्य राज्यांगेष्वखिलेष्वपि ॥
जानतोपि यथाज्ञस्य किमेतन्मुनिसत्तम ॥ ४२ ॥
अयं च निकृतः पुत्रैर्दारैर्भृत्यैस्तथोज्झितः ॥
स्वजनेन च संत्यक्तस्तेषु हार्दी तथाप्यति ॥ ४३ ॥
एवमेष तथाहं च द्वावप्यत्यंतदुःखितौ ॥
दृष्टदोषेऽपि विषये ममत्वाकृष्टमानसौ ॥ ४४ ॥
तत्किमेतन्महाभाग यन्मोहो ज्ञानिनोरपि ॥
ममास्य च भवत्येषा विवेकांधस्य मूढता ॥ ४५ ॥

॥ ऋषिरुवाच ॥ ४६ ॥

ज्ञानमस्ति समस्तस्य जंतोर्विषयगोचरे ॥
विषयाश्च महाभाग यांति चैवं पृथक्पृथक् ॥ ४७ ॥
दिवांधाः प्राणिनः केचिद्रात्रावंधास्तथापरे ॥
केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥ ४८ ॥
ज्ञानिनो मनुजाः सत्यं किं नु ते न हि केवलम् ॥
यतो हि ज्ञानिनः सर्वे पशुपक्षिमृगादयः ॥ ४९ ॥
ज्ञानं च तन्मनुष्याणां यत्तेषां मृगपक्षिणाम् ॥
मनुष्याणां यत्तेषां तुल्यमन्यत्तथोभयोः ॥ ५० ॥
ज्ञानेऽपि सति पश्यैतान् पतंगाञ्छावचंचुषु ॥
कणमोक्षादृतान् मोहात्पीड्यमानानपि क्षुधा ॥ ५१ ॥
मानुषा मनुजव्याघ्रसाभिलाषाः सुतान् प्रति ॥
लोभात्प्रत्युपकाराय नन्वेतान् किं न पश्यसि ॥ ५२ ॥
तथापि ममतावर्ते मोहगर्ते निपातिताः ॥
महामायाप्रभावेण संसारस्थितिकारिणा ॥ ५३ ॥
तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः ॥
महामाया हरेश्चैषा तया संमोह्यते जगत् ॥ ५४ ॥
ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥

बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ ५५ ॥
तया विसृज्यते विश्वं जगदेतच्चराचरम् ॥
सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥ ५६ ॥
सा विद्या परमा मुक्तेर्हेतुभूतासनातनी ॥ ५७ ॥
संसारबंधहेतुश्च सैव सर्वेश्वरेश्वरी ॥ ५८ ॥

राजोवाच ॥ ५९ ॥

भगवन् का हि सा देवी महामायेति यां भवान् ॥
ब्रवीति कथमुत्पन्ना सा कर्मास्याश्च किं द्विज ॥ ६० ॥
यत्प्रभावा च सा देवी यत्स्वरूपा यदुद्भवा ॥ ६१ ॥
तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ॥ ६२ ॥

॥ ऋषिरुवाच ॥ ६३ ॥

नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततम् ॥ ६४ ॥
तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ॥ ६५ ॥
देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ॥
उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥ ६६ ॥
योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते ॥
आस्तीर्यशेषमभजत् कल्पांते भगवान् प्रभुः ॥ ६७ ॥

देवि प्रसीद परिपालय नोऽरि-
भीतेर्नित्यं यथासुरवधादधुनैव सद्यः ॥
पापानि सर्वजगतां प्रशमं नयाशु
ह्युत्पातपाकजनितांश्च महोपसर्गान् ॥ ३४ ॥
प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि ॥
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥ ३५ ॥

देव्युवाच ॥ ३६ ॥

वरदाऽहं सुरगणा वरं यन्मनसेच्छथ ॥
तं वृणुध्वं प्रयच्छामि जगतामुपकारकम् ॥ ३७ ॥

देवा ऊचुः ॥ ३८ ॥

सर्वबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ॥
एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥ ३९ ॥

देव्युवाच ॥ ४० ॥

वैवस्वतेऽन्तरे प्राप्ते अष्टाविंशतिमे युगे ॥
शुंभो निशुंभश्चैवान्यांवुत्पत्स्येते महासुरौ ॥ ४१ ॥
नन्दगोपगृहे जाता यशोदा गर्भसंभवा ॥
ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी ॥ ४२ ॥

पुनरप्यतिरौद्रेण रूपेण पृथिवीतले ॥
अवतीर्य हनिष्यामि वैप्रचित्तांश्च दानवान् ॥ ४३ ॥
भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तान् महासुरान् ॥
रक्ता दन्ता भविष्यन्ति दाडिमीकुसुमोपमाः ॥ ४४ ॥
ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः ॥
स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिकाम् ॥ ४५ ॥
भूयश्च शतवार्षिक्यामनावृष्ट्यामनम्भसि ॥
मुनिभिः संस्मृता भूमौ संभविष्याम्ययोनिजा ॥ ४६ ॥
ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन् ॥
कीर्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः ॥ ४७ ॥
ततोऽहमखिलं लोकमात्मदेहसमुद्भवैः ॥
भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः ॥ ४८ ॥
शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवि ॥
तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् ॥ ४९ ॥
दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति ॥
पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले ॥ ५० ॥
रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् ॥
तदा मां मुनयः सर्वे स्तोष्यन्त्यानम्रमूर्तयः ॥ ५१ ॥

भीमादेवीति विख्यातं तन्मे नाम भविष्यति ॥
यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति ॥ ५२ ॥
तदाऽहं भ्रामरं रूपं कृत्वा संख्येयषट्पदम् ॥
त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् ॥ ५३ ॥
भ्रामरीति च मां लोकास्तदा स्तोष्यन्ति सर्वतः ॥
इत्थं यदा यदा बाधा दानवोत्था भविष्यति ॥ ५४ ॥
तदा तदाऽवतीर्याहं करिष्याम्यरिसंक्षयम् ॥ ५५ ॥

श्रीमार्कण्डेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये नारायणीस्तुतिर्नामैकादशोऽध्यायः ॥ ११ ॥



# ॥ अथ द्वादशोऽध्यायः ॥



देव्युवाच ॥ १ ॥

एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः ॥
तस्याहं सकलां बाधां नाशयिष्याम्यसंशयम् ॥ २ ॥
मधुकैटभनाशं च महिषासुरघातनम् ॥
कीर्तयिष्यन्ति ये तद्वद्वधं शुंभनिशुंभयोः ॥ ३ ॥
अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः ॥
श्रोष्यन्ति चैव ये भक्त्या मम माहात्म्यमुत्तमम् ॥ ४ ॥
न तेषां दुष्कृतं किंचिद्दुष्कृतोत्था न चापदः ॥
भविष्यति न दारिद्र्यं न चैवेष्टवियोजनम् ॥ ५ ॥
शत्रुतो न भयं तस्य दस्युतो वा न राजतः ॥
न शस्त्रानलतोयौघात् कदाचित् संभविष्यति ॥ ६ ॥
तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः ॥
श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं हि तत् ॥ ७ ॥

उपसर्गानशेषास्तु महामारीसमुद्भवान् ॥
तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ॥ ८ ॥
यत्रैतत्पठ्यते सम्यङ्नित्यमायतने मम ॥
सदा न तद्विमोक्ष्यामि सान्निध्यं तत्र मे स्थितम् ॥ ९ ॥
बलिप्रदाने पूजायामग्निकार्ये महोत्सवे ॥
सर्वं ममैतच्चरितमुच्चार्यं श्राव्यमेव वा ॥ १० ॥
जानताऽजानता वापि बलिपूजां तथा कृताम् ॥
प्रतीक्षिष्याम्यहं प्रीत्या वह्निहोमं यथाकृतम् ॥ ११ ॥
शरत्काले महापूजा क्रियते या च वार्षिकी ॥
तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः ॥ १२ ॥
सर्वबाधाविनिर्मुक्तो धनधान्यसमन्वितः ॥
मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥ १३ ॥
श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः ॥
पराक्रमं च युद्धेषु जायते निर्भयः पुमान् ॥ १४ ॥
रिपवः संक्षयं यान्ति कल्याणं चोपपद्यते ॥
नन्दते च कुलं पुंसां माहात्म्यं मम शृण्वताम् ॥ १५ ॥
शान्तिकर्मणि सर्वत्र तथा दुःस्वप्नदर्शने ॥
ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्मम ॥ १६ ॥

उपसर्गाः शमं यान्ति ग्रहपीडाश्च दारुणाः
दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते ॥ १७ ॥
वालग्रहाभिभूतानां बालानां शान्तिकारकम् ॥
संघातभेदे च नृणां मैत्रीकरणमुत्तमम् ॥ १८ ॥
दुर्वृत्तानामशेषाणां बलहानिकरं परम् ॥
रक्षोभूतपिशाचानां पठनादेव नाशनम् ॥ १९ ॥
सर्वं ममैतन्माहात्म्यं मम सन्निधिकारकम् ॥
पशुपुष्पार्घधूपैश्च गन्धदीपैस्तथोत्तमैः ॥ २० ॥
विप्राणां भोजनैर्होमैः प्रोक्षणीयैरहर्निशम्
अन्यैश्च विविधैर्भोगैः प्रदानैर्वत्सरेण या ॥ २१ ॥
प्रीतिर्मे क्रियते सास्मिन्सकृत्सुरिचते श्रुते ॥
श्रुतं हरति पापानि तथारोग्यं प्रयच्छति ॥ २२ ॥
रक्षां करोति भूतेभ्यो जन्मनां कीर्तनं मम ॥
युद्धेषु चरितं यन्मे दुष्टदैत्यनिबर्हणम् ॥ २३ ॥
तस्मिञ्छ्रुते वैरिकृतं भयं पुंसां न जायते ॥
युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृताः ॥ २४ ॥
ब्रह्मणा च कृतास्तास्तु प्रयच्छन्ति शुभां मतिम् ॥
अरण्ये प्रान्तरेवापि दावाग्निपरिवारितः ॥ २५ ॥

दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः ॥
सिंहव्याघ्रानुयातो वा वने वा वनहस्तिभिः ॥ २६ ॥
राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बन्धगतोऽपि वा ॥
आघूर्णितो वा वातेन स्थितः पोते महार्णवे ॥ २७ ॥
पतत्सु चापि शस्त्रेषु संग्रामे भृशदारुणे ॥
सर्वबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा ॥ २८ ॥
स्मरन् ममैतच्चरितं नरो मुच्येत संकटात् ॥
मम प्रभावात्सिंहाद्या दस्यवो वैरिणस्तथा ॥ २९ ॥
दूरादेव पलायन्ते स्मरतश्चरितं मम ॥ ३० ॥

ऋषिरुवाच ॥ ३१ ॥

इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा ॥ ३२ ॥
पश्यतामेव देवानां तत्रैवान्तरधीयत ॥
तेऽपि देवा निरातङ्काः स्वाधिकारान्यथा पुरा ॥ ३३ ॥
यज्ञभागभुजः सर्वे चक्रुर्विनिहतारयः ॥
दैत्याश्च देव्या निहते शुंभे देवरिपौ युधि ॥ ३४ ॥
जगद्विध्वंसिनि तस्मिन् महोग्रेऽतुलविक्रमे ॥
निशुंभे च महावीर्ये शेषाः पातालमाययुः ॥ ३५ ॥

एवं भगवती देवी सा नित्यापि पुनः पुनः ॥
संभूय कुरुते भूप जगतः परिपालनम् ॥ ३६ ॥
तयैतन्मोह्यते विश्वं सैव विश्वं प्रसूयते ॥
सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति ॥ ३७ ॥
व्याप्तं तयैतत्सकलं ब्रह्माण्डं मनुजेश्वर ॥
महाकाल्या महाकाले महामारीस्वरूपया ॥ ३८ ॥
सैव काले महामारी सैव सृष्टिर्भवत्यजा ॥
स्थितिं करोति भूतानां सैव काले सनातनी ॥ ३९ ॥
भवकाले नृणां सैव लक्ष्मीर्वृद्धिप्रदा गृहे ॥
सैवाभावे तथा लक्ष्मीर्विनाशायोपजायते ॥ ४० ॥
स्तुता संपूजिता पुष्पैर्गन्धधूपादिभिस्तथा ॥
ददाति वित्तं पुत्रांश्च मतिं धर्मे गतिं शुभाम् ॥ ४१ ॥

श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवी माहात्म्ये भगवतीवाक्यं नाम द्वादशोऽध्यायः ॥ १२ ॥

—(x:o:x)—

## ॥ अथ त्रयोदशोऽध्यायः ॥



ऋषिरुवाच ॥ १ ॥

एतत्ते कथितं भूप देवीमाहात्म्यमुत्तमम् ॥ २ ॥
एवंप्रभावा सा देवी ययेदं धार्यते जगत् ॥
विद्या तथैव क्रियते भगवद्विष्णुमायया ॥ ३ ॥
तया त्वमेष वैश्यश्च तथैवान्ये विवेकिनः ॥
मोह्यन्ते मोहिताश्चैव मोहमेष्यन्ति चापरे ॥ ४ ॥
तामुपैहि महाराज शरणं परमेश्वरीम् ॥
आराधिता सैव नृणां भोगस्वर्गापवर्गदा ॥ ५ ॥

मार्कण्डेय उवाच ॥ ६ ॥

इति तस्य वचः श्रुत्वा सुरथः स नराधिपः ॥
प्रणिपत्य महाभागं तमृषिं संशितव्रतम् ॥ ७ ॥
निर्विण्णोऽतिममत्वेन राज्यापहरणेन च ॥
जगाम सद्यस्तपसे स च वैश्यो महामुने ॥ ८ ॥

संदर्शनार्थमम्बाया । नदीपुलिनसंस्थितः ॥

स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन् ॥ ९ ॥

तौ तस्मिन् पुलिने देव्याः कृत्वा मूर्तिं महीमयीम् ॥

अर्हणां चक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः ॥ १० ॥

निराहारौ यताहारौ तन्मनस्कौ समाहितौ ॥

ददतुस्तौ बलिं चैव निजगात्रासृगुक्षितम् ॥ ११ ॥

एवं समाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ॥

परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चंडिका ॥ १२ ॥

देव्युवाच ॥ १३ ॥

यत्प्रार्थ्यते त्वया भूप त्वया च कुलनन्दन ॥ १४ ॥

मत्तस्तत्प्राप्यतां सर्वं परितुष्टा ददामि ते ॥ १५ ॥

मार्कण्डेय उवाच ॥ १६ ॥

ततो वव्रे नृपो राज्यमविभ्रंश्यन्यजन्मनि ॥

अत्रैव च निजं राज्यं हतशत्रुबलं बलात् ॥ १७ ॥

सोऽपि वैश्यस्ततो ज्ञानं वव्रे निर्विण्णमानसः ॥

ममेत्यहमिति प्राज्ञस्संगविच्युतिकारकम् ॥ १८ ॥

देव्युवाच ॥ १९ ॥

स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान् ॥ २० ॥

हत्वा रिपूनस्खलितं तव तत्र भविष्यति ॥ २१ ॥

मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः ॥ २२ ॥

सावर्णिको नाम मनुर्भवान्भुवि भविष्यति ॥ २३ ॥

वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवांछितः ॥ २४ ॥

तं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति ॥ २५ ॥

मार्कण्डेय उवाच ॥ २६ ॥

इति दत्वा तयोर्देवी यथाभिलषितं वरम् ॥

बभूवांतर्हिता सद्यो भक्त्या ताभ्यामभिष्टुता ॥ २७ ॥

एवं देव्या वरं लब्ध्वा सुरथः क्षत्रियर्षभः ॥

सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः ॥ २८ ॥

पुनरपि ॥ इति दत्वा तयो० ॥ एवं देव्या वरं० ॥ २९॥

श्री मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये

सुरथवैश्ययोर्वरप्रदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

एवमादितः ॥ ७०० ॥

—(X:o:X)—

## ॥ अथ उत्तराङ्गानि ॥



अथोत्तरन्यासाः ॥

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥
शंखिनी चापिनी बाणभुशुंडीपरिघायुधा ॥ हृदयाय नमः ॥
शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ॥
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥ शिरसे स्वाहा ॥
प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ॥
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ शिखायै वषट् ॥
सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ॥
यानि चात्यर्थघोराणि तै रक्षास्मांस्तथा भुवम् ॥ कवचाय हुं ॥
खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ॥
करपल्लवसंगीनि तैरस्मान्रक्ष सर्वतः ॥ नेत्रत्रयाय वौषट् ॥
सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ॥
भयेभ्यस्त्राहि नोदेवि दुर्गे देवि नमोऽस्तु ते ॥ अस्त्राय फट् ॥

अथ ध्यानं ॥

विद्युद्दामसमप्रभां मृगपतिस्कंधस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ॥
हस्तैश्चक्रधरालिखेटविशिखांश्चापं गुणं तर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥ १ ॥

अथ देवीसूक्तम् ॥

तत्रादौ ऋग्वेदोक्तं देवीसूक्तम् ॥

ॐ अहं रुद्रेभिरित्यष्टर्चस्य सूक्तस्य वागांभृणी ऋषिः । श्रीआदिशक्तिर्देवता त्रिष्टुप्छंदः द्वितीया जगती श्री-जगदंबाप्रीत्यर्थे सप्तशतीजपांते जपे विनियोगः ॥

अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः ॥

अहंमित्रावरुणोभाबिभर्म्यहमिंद्राग्नीअहमश्विनोभा ॥

अहंसोममाहनसंबिभर्म्यहं त्वष्टारमुत पूषणं भगं ॥

अहंदधामिद्रविणंहविष्मतेसुप्राव्ये ३ यजमानाय सुन्वते ॥

अहं राष्ट्रीसंगमनीवसूनांचिकितुषीप्रथमायज्ञियानां ॥

तांमादेवा व्यदधुःपुरुत्राभूरिस्थात्रांभूर्यावेशयन्तीम् ॥

मयासोअन्नमत्तियो विपश्यतियःप्राणिति यंईशृणोत्युक्तम् ॥

अमंतवोमां तउपक्षियंति श्रुधिश्रुतश्रद्धिवंते वदामि ॥

अहमेवस्वयमिदंवदामिजुष्टं देवेभिरुतमानुषेभिः ॥

यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधां ॥

अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहंतवा उ ॥

अहंजनायसमदंकृणोम्यहंद्यावापृथिवी आविवेश ॥

अहंसुवेपितरमस्यमूर्धन्ममयो निरप्स्वं १ तःसमुद्रे ॥

ततोवितिष्ठे भुवनानि विश्वोतामूंद्यां वर्ष्मणोप स्पृशामि ॥

अहमेव वातइव प्रवाम्यारभमाणाभुवनानिविश्वा ॥

परोदिवापरएनापृथिव्यै तावतीमहिना संबभूव ॥

इति ऋग्वेदोक्तं देवीसूक्तं समाप्तम् ॥

## अथ तंत्रोक्तं देवीसूक्तम् ॥

नमो देव्यै महादेव्यै शिवायै सततं नमः ॥
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ १ ॥
रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः ॥
ज्योत्स्नायै चेंदुरूपिण्यै सुखायै सततं नमः ॥ २ ॥
कल्याण्यै प्रणतां वृद्ध्यै सिद्ध्यै कूर्म्यै नमो नमः ॥
नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः ॥ ३ ॥
दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ॥
ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥ ४ ॥
अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः ॥
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥ ५ ॥
या देवी सर्वभूतेषु विष्णुमायेति शब्दिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ६ ॥
या देवी सर्वभूतेषु चेतनेत्यभिधीयते ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ७ ॥
या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ८ ॥

या देवी सर्वभूतेषु निद्रारूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ९ ॥
या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १० ॥
या देवी सर्वभूतेषु छायारूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ११ ॥
या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १२ ॥
या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १३ ॥
या देवी सर्वभूतेषु क्षान्तिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १४ ॥
या देवी सर्वभूतेषु जातिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १५ ॥
या देवी सर्वभूतेषु लज्जारूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १६ ॥
या देवी सर्वभूतेषु शान्तिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १७ ॥

या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १८ ॥
या देवी सर्वभूतेषु कान्तिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १९ ॥
या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २० ॥
या देवी सर्वभूतेषु वृत्तिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २१ ॥
या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २२ ॥
या देवी सर्वभूतेषु दयारूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २३ ॥
या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २४ ॥
या देवी सर्वभूतेषु मातृरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २५ ॥
या देवी सर्वभूतेषु भ्रान्तिरूपेण संस्थिता ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २६ ॥

इन्द्रियाणामधिष्ठात्री भूतानां चाखिलेषु या ॥
भूतेषु सततं तस्यै व्याप्त्यै देव्यै नमो नमः ॥ २७ ॥
चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् ॥
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २८ ॥

स्तुता सुरैः पूर्वमभीष्टसंश्रयात्तथा
सुरेन्द्रेण दिनेषु सेविता ॥
करोतु सा नः शुभहेतुरीश्वरी
शुभानि भद्राण्यभिहन्तु चापदः ॥ २९ ॥
या सांप्रतं चोद्धतदैत्यतापितै-
रस्माभिरीशा च सुरैर्नमस्यते ॥
या च स्मृता तत्क्षणमेव हन्ति नः
सर्वापदो भक्तिविनम्रमूर्तिभिः ॥ ३० ॥

इति देवीसूक्तं पठित्वा पूर्ववन्नवार्णमंत्रस्य ऋष्यादि-षडंगन्यासपूर्वकमष्टोत्तरशतं जपं कृत्वा तदुत्तरन्यासान्वि-धाय ॥

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धि-र्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥ इतिमन्त्रेण देव्या वामहस्ते जपं निवेदयित्वा रहस्यत्रयं पठेत् ॥

अस्य श्रीसप्तशतीरहस्यत्रयस्य नारायण ऋषिः ॥ अनुष्टुप् छंदः ॥ महाकालीमहालक्ष्मी महासरस्वत्यो देवताः ॥ यथोक्तफलावाप्त्यर्थं जपे विनियोगः ॥

राजोवाच ॥

भगवन्नवतारा मे चण्डिकायास्त्वयोदिताः ॥
एतेषां प्रकृतिं ब्रह्मन् प्रधानं वक्तुमर्हसि ॥ १ ॥
आराध्यं यन्मया देव्याः स्वरूपं येन वै द्विज ॥
विधिना ब्रूहि सकलं यथावत्प्रणतस्य मे ॥ २ ॥

ऋषिरुवाच ॥

इदं रहस्यं परममनाख्येयं प्रचक्ष्यते ॥
भक्तोऽसीति न मे किंचित्तवावाच्यं नराधिप ॥ ३ ॥
सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी ॥
लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता ॥ ४ ॥
मातुलिङ्गं गदां खेटं पानपात्रं च बिभ्रती ॥
नागं लिङ्गं च योनिं च बिभ्रती नृप मूर्धनि ॥ ५ ॥
तप्तकांचनवर्णाभा तप्तकांचनभूषणा ॥
शून्यं तदखिलं स्वेन पूरयामास तेजसा ॥ ६ ॥

शून्यं तदखिलं लोकं विलोक्य परमेश्वरी ॥
बभार रूपमपरं तमसा केवलेन हि ॥ ७ ॥
सा भिन्नांजनसंकाशा दंष्ट्रांचितवरानना ॥
विशाललोचना नारी बभूव तनुमध्यमा ॥ ८ ॥
खड्गपात्रशिरःखेटैरलंकृतचतुर्भुजा ॥
कबंधहारं शिरसा बिभ्राणा हि शिरःस्रजम् ॥ ९ ॥
सा प्रोवाच महालक्ष्मीं तामसी प्रमदोत्तमा ॥
नाम कर्म च मे मातर्देहि तुभ्यं नमो नमः ॥ १० ॥
तां प्रोवाच महालक्ष्मीस्तामसीं प्रमदोत्तमाम् ॥
ददामि तव नामानि यानि कर्माणि तानि च ॥ ११ ॥
महामाया महाकाली महामारी क्षुधा तृषा ॥
निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया ॥ १२ ॥
इमानि तव नामानि प्रतिपाद्यानि कर्मभिः ॥
एभिः कर्माणि ते ज्ञात्वा योऽधीते सोऽश्नुतेसुखम् ॥ १३ ॥
तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरं नृप ॥
सत्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ ॥ १४ ॥
अक्षमालांकुशधरा वीणापुस्तकधारिणी ॥
सा बभूव वरा नारी नामान्यस्यै च सा ददौ ॥ १५ ॥

महाविद्या महावाणी भारती वाक् सरस्वती ॥
आर्या ब्राह्मी कामधेनुर्वेदगर्भा च धीश्वरी ॥ १६ ॥
अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम् ॥
युवां जनयतां देव्यौ मिथुने स्वानुरूपतः ॥ १७ ॥
इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम् ॥
हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ ॥ १८ ॥
ब्रह्मन्विधे विरिंचेति धातरित्याह तं नरम् ॥
श्रीःपद्म कमले लक्ष्मीत्याह माता स्त्रियं च ताम् ॥ १९ ॥
महाकाली भारती च मिथुने सृजतः सह ॥
एतयोरपि रूपाणि नामानि च वदामि ते ॥ २० ॥
नीलकण्ठं रक्तबाहुं श्वेतांगं चंद्रशेखरं ॥
जनयामास पुरुषं महाकाली सितां स्त्रियम् ॥ २१ ॥
स रुद्रः शंकरः स्थाणुः कपर्दी च त्रिलोचनः ॥
त्रयी विद्या कामधेनुः सा स्त्री भाषाक्षरा स्वरा ॥ २२ ॥
सरस्वती स्त्रियं गौरीं कृष्णं च पुरुषं नृप ॥
जनयामास नामानि तयोरपि वदामि ते ॥ २३ ॥
विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः ॥
उमा गौरी सती चंडी सुंदरी सुभगा शुभा ॥ २४ ॥

एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे ॥
चक्षुष्मन्तोऽनुपश्यन्ति नेतरे तद्विदो जनाः ॥ २५ ॥
ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृपत्रयीम् ॥
रुद्राय गौरीं वरदां वासुदेवाय च श्रियम् ॥ २६ ॥
स्वरया सह संभूय विरिंचोऽण्डमजीजनत् ॥
बिभेद भगवान्रुद्रस्तद्गौर्या सहवीर्यवान् ॥ २७ ॥
अण्डमध्ये प्रधानादिकार्यजातमभून्नृप ॥
महाभूतात्मकं सर्वं जगत्स्थावरजंगमम् ॥ २८ ॥
पुपोष पालयामास तल्लक्ष्म्या सह केशवः ॥
संजहार जगत्सर्वं सह गौर्या महेश्वरः ॥ २९ ॥
महालक्ष्मीर्महाराज सर्वसत्त्वमयीश्वरी ॥
निराकारा च साकारा सैव नानाभिधानभृत् ॥ ३० ॥
नामान्तरैर्निरूप्यैषा नाम्ना नान्येन केनचित् ॥ ३१ ॥

इति प्राधानिकं रहस्यं समाप्तम् ॥

ऋषिरुवाच ॥

त्रिगुणा तामसी देवी सात्त्विकी या त्वयोदिता ॥
सा शर्वा चण्डिका दुर्गा भद्रा भगवतीर्यते ॥ १ ॥

योगनिद्रा हरेरुक्ता महाकाली तमोगुणा ॥
मधुकैटभनाशार्थं यां तुष्टावाम्बुजासनः ॥ २ ॥
दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा ॥
विशालया राजमाना त्रिंशल्लोचनमालया ॥ ३ ॥
स्फुरद्दशनदंता सा भीमरूपापि भूमिप ॥
रूपसौभाग्यकान्तीनां सा प्रतिष्ठा महाश्रियाम् ॥ ४ ॥
खङ्गबाणगदाशूलशंखचक्रभुशुण्डिभृत् ॥
परिघं कार्मुकं शीर्षं निश्च्योतद्रुधिरं दधौ ॥ ५ ॥
एषा सा वैष्णवी माया महाकाली दुरत्यया ॥
आराधिता वशीकुर्यात्पूजाकर्तुश्चराचरम् ॥ ६ ॥
सर्वदेवशरीरेभ्यो याऽऽविर्भूतामितप्रभा ॥
त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्दिनी ॥ ७ ॥
श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला ॥
रक्तमध्या रक्तपादा नीलजंघोरुरुन्मदा ॥ ८ ॥
सुचित्रजघना चित्रमाल्याम्बरविभूषणा ॥
चित्रानुलेपना कान्तिरूपसौभाग्यशालिनी ॥ ९ ॥
अष्टादशभुजापूज्या सा सहस्रभुजा सती ॥
आयुधान्यत्रवक्ष्यन्ते दक्षिणाधः करक्रमात् ॥ १० ॥

अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा ॥
चक्रं त्रिशूलं परशुः शंखो घण्टा च पाशकः ॥ ११ ॥
शक्तिर्दण्डश्चर्मचापं पानपात्रं कमण्डलुः ॥
अलंकृतभुजामेभिरायुधैः कमलासनाम् ॥ १२ ॥
सर्वदेवमयीमीशां महालक्ष्मीमिमां नृप ॥
पूजयेत् सर्वलोकानां स देवानां प्रभुर्भवेत् ॥ १३ ॥
गौरीदेहात्समुद्भूता या सत्त्वैकगुणाश्रया ॥
साक्षात्सरस्वती प्रोक्ता शुंभासुरनिबर्हिणी ॥ १४ ॥
दधौ चाष्टभुजा बाणान् मुसलं शूलचक्रभृत् ॥
शंखं घण्टां लांगलं च कार्मुकं वसुधाधिप ॥ १५ ॥
एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति ॥
निशुंभमथिनी देवी शुंभासुरनिबर्हिणी ॥ १६ ॥
इत्युक्तानि स्वरूपाणि मूर्तीनां तव पार्थिव ॥
उपासनं जगन्मातुः पृथगासां निशामय ॥ १७ ॥
महालक्ष्मीर्यदा पूज्या महाकाली सरस्वती ॥
दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुनत्रयम् ॥ १८ ॥
विरंचिः स्वरया मध्ये रुद्रो गौर्या च दक्षिणे ॥
वामे लक्ष्म्या हृषीकेशः पुरतो देवतात्रयम् ॥ १९ ॥

अष्टादशभुजा मध्ये वामे चास्या दशानना ॥
दक्षिणेऽष्टभुजा लक्ष्मीर्महतीति समर्चयेत् ॥ २० ॥
पूर्वादिदलतः पूज्या असिताङ्गादिभैरवाः ॥
अष्टादशभुजा चैषा यदा पूज्या नराधिप ॥ २१ ॥
दशानना चाष्टभुजा दक्षिणोत्तरयोस्तदा ॥
दशानना यदा पूज्या दक्षिणोत्तरयोस्तदा ॥ २२ ॥
कालमृत्यू च संपूज्यौ सर्वारिष्टप्रशान्तये ॥
यदा चाष्टभुजा पूज्या शुंभासुरनिबर्हिणी ॥ २३ ॥
नवास्याः शक्तयः पूज्यास्तदा रुद्रविनायकौ ॥
नमो देव्या इति स्तोत्रैर्महालक्ष्मीं समर्चयेत् ॥ २४ ॥
अवतारत्रयार्चायां स्तोत्रमन्त्रास्तदाश्रयाः ॥
अष्टादशभुजा चैषा पूज्या महिषमर्दिनी ॥ २५ ॥
महालक्ष्मीर्महाकाली सैव प्रोक्ता सरस्वती ॥
ईश्वरी पुण्यपापानां सर्वलोकमहेश्वरी ॥ २६ ॥
महिषान्तकरी येन पूजिता स जगत्प्रभुः ॥
पूजयेज्जगतां धात्रीं चण्डिकां भक्तवत्सलाम् ॥ २७ ॥
अर्घादिभिरलंकारैर्गन्धपुष्पैस्तथोत्तमैः ॥
धूपैर्दीपैश्च नैवेद्यैर्नानाभक्ष्यसमन्वितैः ॥ २८ ॥

रुधिराक्तेन बलिना मांसेन सुरया नृप ॥
बलिमांसादि पूजेयं विप्रवर्ज्या मयेरिता ॥ २९ ॥
तेषां किल सुरामांसैर्नोक्ता पूजा नृप क्वचित् ॥
प्रणामाचमनीयेश्च चन्दनेन सुगन्धिना ॥ ३० ॥
सकर्पूरैश्च ताम्बूलैर्भक्तिभावसमन्वितैः ॥
वामभागेऽग्रतो देव्याश्छिन्नशीर्षं महासुरम् ॥ ३१ ॥
पूजयेन्महिषं येन प्राप्तं सायुज्यमीशया ॥
दक्षिणे पुरतः सिंहं समग्रं धर्ममीश्वरम् ॥ ३२ ॥
वाहनं पूजयेद्देव्या धृतं येन चराचरम् ॥
ततः कृतांजलिर्भूत्वा स्तुवीत चरितैरिमैः ॥ ३३ ॥
एकेन या मध्यमेन नैकेनेतरयोरिह ॥
चरितार्धं तु न जपेज्जपञ्छिद्रमवाप्नुयात् ॥ ३४ ॥
स्तोत्रमन्त्रैः स्तुवीतेमां यदि वा जगदंबिकाम् ॥
प्रदक्षिणा नमस्कारान् कृत्वा मूर्ध्नि कृतांजलिः ॥ ३५ ॥
क्षमापयेज्जगद्धात्रीं मुहुर्मुहुरतन्द्रितः ॥
प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पिषा ॥ ३६ ॥
जुहुयात्स्तोत्रमन्त्रैर्वा चण्डिकायै शुभं हविः ॥
भूयो नामपदैर्देवीं पूजयेत् सुसमाहितः ॥ ३७ ॥

प्रयतः प्रांजलिः प्रह्वः प्राणानारोप्य चात्मनि ॥
सुचिरं भावयेद्देवीं चण्डिकां तन्मयो भवेत् ॥ ३८ ॥
एवं यः पूजयेद्भक्त्या प्रत्यहं परमेश्वरीम् ॥
भुक्त्वा भोगान् यथाकामं देवीसायुज्यमाप्नुयात् ॥ ३९ ॥
यो न पूजयते नित्यं चण्डिकां भक्तवत्सलाम् ॥
भस्मीकृत्यास्य पुण्यानि निर्दहेत्परमेश्वरी ॥ ४० ॥
तस्मात्पूजय भूपाल सर्वलोकमहेश्वरीम् ॥
यथोक्तेन विधानेन चण्डिकां सुखमाप्स्यसि ॥ ४१ ॥

इति वैकृतिकं रहस्यं समाप्तम् ॥

ऋषिरुवाच ॥

नन्दा भगवतीनाम या भविष्यति नन्दजा ॥
स्तुता संपूजिता भक्त्या वशी कुर्याज्जगत्त्रयम् ॥ १ ॥
कनकोत्तमकान्तिः सा सुकान्तिकनकाम्बरा ॥
देवी कनकवर्णाभा कनकोत्तमभूषणा ॥ २ ॥
कमलाङ्कुशपाशाब्जैरलंकृतचतुर्भुजा ॥
इन्दिरा कमलालक्ष्मीः सा श्रीरुक्मांबुजासना ॥ ३ ॥
या रक्तदन्तिका नाम देवी प्रोक्ता मयाऽनघ ॥
तस्याः स्वरूपं वक्ष्यामि शृणु सर्वभयापहम् ॥ ४ ॥

यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
रक्ताम्बरा रक्तवर्णा रक्तसर्वांगभूषणा ॥ ५ ॥
रक्तायुधा रक्तनेत्रा रक्तकेशाऽतिभीषणा ॥
रक्ततीक्ष्णनखा रक्तरसना रक्तदन्तिका ॥ ६ ॥
पतिं नारी वाऽनुरक्ता देवी भक्तं भजेज्जनम् ॥
वसुधेव विशाला सा सुमेरुयुगलस्तनी ॥ ७ ॥
दीर्घौ लम्बावतिस्थूलौ तावतीव मनोहरौ ॥
कर्कशावतिकान्तौ तौ सर्वानन्दपयोनिधी ॥ ८ ॥
भक्तान् संपाययेद्देवी सर्वकामदुघौ स्तनौ ॥
खड्गपात्रशिरः खेटैरलंकृतचतुर्भुजा ॥ ९ ॥
आख्याता रक्तचामुण्डा देवी योगेश्वरीति च ॥
अनया व्याप्तमखिलं जगत्स्थावरजंगमम् ॥ १० ॥
इमां यः पूजयेद्भक्त्या स व्याप्नोति चराचरम् ॥
भुक्त्वा भोगान् यथाकामं देवीसायुज्यमाप्नुयात् ॥ ११ ॥
अधीते य इमं नित्यं रक्तदन्त्या वपुः स्तवम् ॥
तं सा परिचरेद्देवी पतिं प्रियमिवांगना ॥ १२ ॥
शाकंभरी नीलवर्णा नीलोत्पलविलोचना ॥
गम्भीरनाभिस्त्रिवलीविभूषिततनूदरी ॥ १३ ॥

सुकर्कशसमोत्तुंगवृत्तपीनघनस्तनी ॥
मुष्टिं शिलीमुखा पूर्णं कमलं कमलालया ॥ १४ ॥
पुष्पपल्लवमूलादिफलाढ्यं शाकसंचयम् ॥
काम्यानन्तरसैर्युक्तंक्षुत्तृणमृत्युजरापहम् ॥ १५ ॥
कार्मुकं च स्फुरत्कान्ति बिभर्ति परमेश्वरी ॥
शाकंभरी शताक्षी सा सैव दुर्गा प्रकीर्तिता ॥ १६ ॥
उमा गौरी सती चंडी कालिका सा च पार्वती ॥
शाकंभरी स्तुवन् ध्यायन् जपन् संपूजयन्नमन् ॥ १७ ॥
अक्षय्यमश्नुते शीघ्रमन्नपानामृतं फलम् ॥
भीमापि नीलवर्णा सा दंष्ट्रादशनभासुरा ॥ १८ ॥
विशाललोचना नारी वृत्तपीनपयोधरा ॥
चन्द्रहासं च डमरुं शिरःपात्रं च बिभ्रती ॥ १९ ॥
एकवीरा कालरात्रिः सैवोक्ता कामदा स्तुता ॥
तेजोमण्डलदुर्धर्षा भ्रामरी चित्रकान्तिभृत् ॥ २० ॥
चित्रभ्रमरसंकाशा महामारीति गीयते ॥
इत्येता मूर्तयो देव्या व्याख्याता वसुधाधिप ॥ २१ ॥
जगन्मातुश्चण्डिकायाः कीर्तिताः कामधेनवः ॥
इदं रहस्यं परमं न वाच्यं कस्यचित्त्वया ॥ २२ ॥

आख्यानं दिव्यमूर्तीनामधीष्वावहितः स्वयम् ॥
एतस्यास्त्वं प्रसादेन सर्वमान्यो भविष्यसि ॥ २३ ॥
सप्तजन्मार्जितैर्घोरैर्ब्रह्महत्यासमैरपि ॥
पाठमात्रेण मंत्राणां मुच्यते सर्वकिल्विषैः ॥ २४ ॥
देव्या ध्यानं मया ख्यातं गुह्याद्गुह्यतरं महत् ॥
सर्वरूपमयी देवी सर्वं देवीमयं जगत् ॥ २५ ॥
ततोऽहं विश्वरूपां त्वां नमामि परमेश्वरीम् ॥ २६ ॥

इति मूर्ति रहस्यं समाप्तम् ॥

—(×:०:×)—

अपराधशतं कृत्वा जगदंबेति चोच्चरेत् ॥
यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः ॥
सापराधोऽस्मि शरणं प्राप्तस्त्वां जगदंबिके ॥
इदानीमनुकंप्योऽहं यथेच्छसि तथा कुरु ॥
अज्ञानाद्विस्मृतेर्भ्रांत्या यन्न्यूनमधिकं कृतम् ॥
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥
कामेश्वरि जगन्मातः सच्चिदानंदविग्रहे ॥
गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि ॥
सर्वरूपमयी देवी सर्वं देवीमयं जगत् ॥
अतोऽहं विश्वरूपां त्वां नमामि परमेश्वरीम् ॥
गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ॥
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरी ॥

इति मंत्रेण देव्या दक्षिणकरे जपं समर्प्य यथासुखं विहरेदिति ॥

श्रीजगदंबा प्रसन्ना भवतु ॥

इत्युत्तरविधिः समाप्तः ।



# ॥ नवचंडीशतचंडीसहस्रचंडी-होमप्रयोगः ॥

# ॥ अथ सप्तशतीहोमप्रयोगः ॥



॥ श्रीगणेशाय नमः ॥

यजमानः शुभदिने सपत्नीकस्तिलतैलेन कृताभ्यंगः स्नात्वा सपूर्णकलशहस्तो मंडपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविश्योपविश्य देशकालौ स्मृत्वा ममेहजन्मनि दुर्गाप्रीतिद्वारा सर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनधान्यपुत्रपौत्राद्यनवच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थं ममामुककार्यसिद्ध्यर्थं वा सनवग्रहमखां नवचंडीं शतचंडीं सहस्रचंडीं (वा ब्राह्मणद्वारा) करिष्ये ॥ तदंगतया गणेशपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धमाचार्यादिवरणं च करिष्ये ॥ इति संकल्प्य तानि कृत्वा आचार्यादीन्वृत्वा तान्यथाविभवं वस्त्रादिना संपूज्य प्रार्थयेच्च ॥ (ते च शतचंड्यां दश । सहस्रचंड्यां शतं । केचिदत्र ग्रहजपार्थमेकमृत्विजं वरयंति ॥)

अथाचार्यः आचम्य देशकालौ संकीर्त्य यजमानेन वृतोहमाचार्यकर्म करिष्ये । इति संकल्प्य यदत्रेतिगौरसर्षपान्विकीर्य पंचगव्येन कुशोदकेन वा मंडपं प्रोक्षेत् ॥

॥ भूतशुद्धिः ॥

आपोहिष्ठा मयोभुवस्तानऽऊर्ज्जे दधातन । महेरणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयते हनः ॥ उशतीरिव मातरः तस्माऽअरङ्गमामवो यस्य क्षयाय जिन्वथ । आपोजनयथा च नः ॥

अपवित्रः पवित्रो वा सर्वावस्थांगतोपि वा । यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ।

॥ आसनशुद्धिः ॥

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् । इत्युपविश्य अनंतासनाय नमः ॥ विमलासनाय नमः । पद्मासनाय नमः । अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशम् सर्वेषामविरोधेन पूजा कर्म समारभे । इति भूमौ वामपादघातत्रयं कृत्वा यथोपदेशं विस्तरतः संक्षेपेण वा भूतशुद्ध्यादि कृत्वा नवार्ण-

विध्युक्तैकादशन्यासान्कुर्यात् ॥ अथवैकादशमेवैकं न्यासं कुर्यात् ॥ ततो योनिमुद्रां प्रदर्श्य ध्यायेत् ॥

॥ ध्यानम् ॥

श्वेतानना नीलभुजा सुश्वेतस्तनमंडला ॥ रक्तमध्या रक्तपादा नीलजंघोरुरुन्मदा ॥ सुचित्रजघना चित्रमाल्यांबर-विभूषणा ॥ चित्रानुलेपना कांतिरूपसौभाग्यशालिनी ॥ अष्टा-दशभुजा पूज्या सा सहस्रभुजा सती ॥ आयुधान्यत्र वक्ष्यंते दक्षिणाधःकरक्रमात् ॥ अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा ॥ चक्रं त्रिशूलं परशुः शंखो घंटा च पाशकः ॥ शक्तिर्दंडश्चर्म चापं पानपात्रं कमंडलुः ॥

ततो वेद्यां सर्वतोभद्रमष्टदलं वा विलिख्य तत्र ब्रह्मा-दिमंडलदेवताः संस्थाप्य तन्मध्ये महीद्यौरित्यादिमंत्रैः कलशं संस्थाप्य तस्मिन्गंधपुष्पफलसर्वौषधिदूर्वापंचपल्लवसप्तमृत्तिका-स्तत्तन्मंत्रेण निक्षिप्य वस्त्रद्वयेनावेष्ट्य तदुपरि पूर्णपात्रं निधाय कलशे वरुणमावाह्य पूजयेत् ॥ ततःकलशदेवताःस्मरेत् ॥

॥ कलशाऽऽवाहनम् ॥

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्रस्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः । कुक्षौ तु

सागराः सर्वे सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ युजुर्वेदः सामवेदो ह्यथर्वणः। अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः॥

॥ कलशप्रार्थना ॥

देवदानवसंवादे मथ्यमाने महोदधौ। उत्पन्नोऽसि सदा कुम्भ विधृतो विष्णुना स्वयम्। त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः। शिवः स्वयं त्वमेवाऽसि विष्णुस्त्वं च प्रजापतिः। आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः। त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः। त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव। सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा॥

तथा कलशोपरिस्थपूर्णपात्रेवस्त्रे यंत्र लिखेत्॥ तद्यथा॥ मध्ये त्रिकोणं तद्बहिः षट्कोणं तद्बाह्ये वृत्तं तद्बाह्येऽष्टौदलानि तद्बाह्ये चतुर्द्वारं चतुरस्रत्रयमिति। एवं यंत्रं विलिख्य तत्राष्टादशभुजां अष्टभुजां वा सिंहारूढां सौवर्णीं देवीमूर्तिमग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं प्रतिष्ठाप्य पूजयेत्॥ तद्यथा॥

स्ववामे कर्पूरादियुतजलपूर्णकलशं संपूज्य—कलशस्यमुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तत्रस्थितो ब्रह्मा मध्ये

मातृगणाः स्मृताः । कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ गंगे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु । इत्यादि पठित्वा कलशमुद्रां प्रदर्श्य दक्षिणतः शंखं पूजयेत् ॥

॥ शंखपूजनम् ॥

शंखं चंद्रार्कदैवत्यं कुक्षौ वरुण देवता । पृष्ठे प्रजापतिश्चैव अग्रे गंगा सरस्वती । त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया । शङ्खे तिष्ठन्ति विप्रेन्द्र तस्माच्छङ्खं प्रपूजयेत । त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे । निर्मितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते । पाञ्चजन्याय विद्महे । पावनाय धीमहि । तन्नः शङ्खःप्रचोदयात् । इति पठित्वा शंखमुद्रां प्रदर्श्य शंखोदकेनात्मानं पूजाद्रव्याणि च प्रोक्षेत् ॥ अपवित्रः पवित्रोवा० ॥ पीठपूजांकुर्यात् ॥

॥ पीठपूजनम् ॥

देवीदक्षिणे गुं गुरुभ्यो नमः ॥ पं परमगुरुभ्योनमः ॥ पं परात्परगुरुभ्योनमः ॥ पं परमेष्ठिगुरुभ्यो नमः ॥ वामे—गं

गणपतये नमः ॥ दुं दुर्गायै नमः ॥ क्षं क्षेत्रपालाय नमः ॥ मध्ये—आधारशक्त्यैनमः ॥ मूलप्रकृत्यै नमः ॥ कालाग्नि-रुद्राय नमः ॥ महामंडूकाय नमः ॥ कूर्माय नमः ॥ वराहाय नमः ॥ अनंताय नमः ॥ भूम्यै नमः ॥ अमृतार्णवाय नमः ॥ रत्नद्वीपाय नमः ॥ हेमगिरये नमः ॥ नंदनोद्यानाय नमः ॥ मणिभूम्यै नमः ॥ रत्नमंडपाय नमः ॥ कल्पतरवे नमः ॥ रत्नसिंहासनाय नमः ॥ आग्नेय्यादिकोणेषु—धर्माय नमः ॥ ज्ञानाय नमः ॥ वैराग्याय नमः ॥ ऐश्वर्याय नमः ॥ अधर्माय नमः ॥ अज्ञानाय नमः ॥ अवैराग्याय नमः ॥ अनैश्वर्याय नमः ॥ ऊर्ध्वं—ब्रह्मणे नमः ॥ अधः—अनंताय नमः ॥ मध्ये—वास्तुपुरुषाय नमः ॥ सं सत्वाय नमः ॥ रं रजसे नमः ॥ तं तमसे नमः ॥ मां मायायै नमः ॥ विं विद्यायै नमः ॥

पूर्वाद्यष्टदिक्षु — उड्डाणपीठेश्वरसहितामुड्डाणपीठेश्वर्यंबा-पादुकां पूजयामि ॥ मातृकापीठेश्वरसहितां मातृकापीठेश्वर्यंबा-पादुकां पूजयामि ॥ जालंधरपीठेश्वरसहितां जालंधरपीठेश्वर्यंबा-पादुकां पूजयामि ॥ कोल्हागिरिपीठेश्वरसहितां कोल्हागिरि-पीठेश्वर्यंबापादुकां पूजयामि ॥ पूर्णगिरिपीठेश्वरसहितां पूर्ण-

गिरिपीठेश्वर्यंबापादुकां पूजयामि ॥ संहारगिरिपीठेश्वरसहितां संहारगिरिपीठेश्वर्यंबापादुकां पूजयामि ॥ कोल्हापुरपीठेश्वर-सहितां कोल्हापुरपीठेश्वर्यंबापादुकां पूजयामि ॥ कामरूप-पीठेश्वरसहितां कामरूपपीठेश्वर्यंबापादुकां पूजयामि ॥

पुनः पूर्वादिचतुर्दिक्षु—गं गणेशायनमः ॥ क्षं क्षेत्रपालाय नमः । पां पादुकाभ्यो नमः ॥ बं बटुकेभ्यो नमः ॥ आग्नेय्या-दिविदिक्षु—जं जयायै नमः ॥ विं विजयायै नमः ॥ जं जयंत्यै नमः ॥ अं अपराजितायै नमः ॥ तत्रैव—अग्नि-मुखवेतालाय नमः ॥ प्रेतवाहनवेतालाय नमः ॥ ज्वालामुख-वेतालाय नमः ॥ धूम्राक्षवेतालाय नमः ॥ कंदाय नमः ॥ नालाय नमः ॥ दलेभ्यो नमः ॥ केसरेभ्यो नमः ॥ कर्णि-कायै नमः ॥ अं सूर्यमंडलाय नमः ॥ उं सोममंडलाय नमः ॥ मं वह्निमंडलाय नमः ॥ अं आत्मने नमः ॥ उं अंतरात्मने नमः ॥ पं परमात्मने नमः ॥ उं ज्ञानात्मने नमः ॥ विं विष्णुमायायै नमः ॥ चें चेतनायै नमः ॥ बुं बुद्ध्यै नमः ॥ निं निद्रायै नमः ॥ क्षुं क्षुधायै नमः ॥ छां छायायै नमः ॥ शं शक्त्यै नमः ॥ तृं तृष्णायै नमः ॥ क्षां क्षांत्यै नमः ॥ जां जात्यै नमः ॥ लं ललितायै नमः ॥ शां शांत्यै नमः ॥

श्रं श्रद्धायै नमः ॥ कां कांत्यै नमः ॥ लं लक्ष्म्यै नमः ॥ धृं धृत्यै नमः ॥ वृं वृद्ध्यै नमः ॥ स्मृं स्मृत्यै नमः ॥ दं दयायै नमः ॥ तुं तुष्ट्यै नमः ॥ पुं पुष्ट्यै नमः ॥ मां मातृकायै नमः ॥ भ्रां भ्रांत्यै नमः ॥ ह्रीं सर्वशक्तिकमलासनाय नमः ॥ सर्वात्मसंसर्गयोगपीठात्मने नमः ॥ इति पीठपूजा ॥ तथा स्थापितमूर्तौदेवीमावाहयेत् ॥

॥ आवाहनम् ॥

आगच्छ वरदे देवि दैत्यदर्पनिषूदिनि ॥ पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये ॥ दुर्गेदेवि समागच्छ सान्निध्यमिहकल्पय ॥ बलिं पूजां गृहाणत्वमष्टाभिः शक्तिभिः सह ॥

मूर्तौ मंत्रौ पठित्वा मूर्तौ देवीमावाह्य मूलमंत्रेण जयंतीमंगलाकालीत्यनेन वा आसनपाद्यार्घ्याचमनमधुपर्कान्निवेदयेत् ॥

॥ पंचामृतस्नानं ॥

देवीसूक्तश्रीसूक्तसरस्वतीसूक्तैर्देवीमाहात्म्योक्तैः शक्रादयइत्यादिस्तोत्रैश्चाभिषेकः ॥ ततः पूर्वोक्तमंत्रेण वस्त्रकंचुकाभरणाष्टगंधबिल्वपत्रनानापुष्पहरिद्राकुंकुमसिंदूरालक्तकपरिमलद्रव्याणि समर्पयेत् ॥

## ॥ अथांगपूजा ॥

ॐ दुर्गायै नमः पादौ । गिरिजायै नमः गुल्फौ । अपर्णायै नमः जानुनी । हरिप्रियायै नमः ऊरू । पार्वत्यै नमः कटिं । आर्यायै नमः नाभिं । जगन्मात्रे नमः उदरं । मंगलायै नमः कुक्षिं ॥ शिवायै नमः हृदयं । माहेश्वर्यै नमः कंठं । विश्ववंद्यायै नमः स्कंधौ । काल्यै नमः बाहू । आद्यायै नमः हस्तौ । वरदायै नमः मुखं । सुवाण्यै नमः नासिकां । कमलाक्ष्यै नमः नेत्रे । अंबिकायै नमः शिरः । देव्यै नमः सर्वांगं ।

## अथाष्टोत्तरशतनामानि ॥

ॐ माहेश्वर्यै नमः । महादेव्यै नमः । जयंत्यै नमः । सर्वमंगलायै नमः । लज्जायै नमः । भगवत्यै नमः । वंद्यायै नमः । भवान्यै नमः । पापनाशिन्यै नमः । चंडिकायै नमः । कालरात्र्यै नमः । भद्रकाल्यै नमः । अपराजितायै नमः । महाविद्यायै नमः । महामेधायै नमः । महामायायै नमः । महाबलायै नमः । कात्यायन्यै नमः । जयायै नमः । दुर्गायै नमः । मंदारवनवासिन्यै नमः । आर्यायै नमः ।

गिरिसुतायै नमः। धात्र्यै नमः। महिषासुरघातिन्यै नमः। सिद्धिदायै नमः। बुद्धिदायै नमः। नित्यायै नमः। वरदायै नमः। वरवर्णिन्यै नमः। अंबिकायै नमः। सुखदायै नमः। सौम्यायै नमः। जगन्मात्रे नमः। शिवप्रियायै नमः। भक्तसंतापसंहर्त्र्यै नमः। सर्वकामप्रपूरिण्यै नमः। जगत्कर्त्र्यै नमः। जगद्धात्र्यै नमः। जगत्पालनतत्परायै नमः। अव्यक्तायै नमः। व्यक्तरूपायै नमः। भीमायै नमः। त्रिपुरसुंदर्यै नमः। अपर्णायै नमः। ललितायै नमः। वेद्यायै नमः। पूर्णचंद्रनिभाननायै नमः। चामुंडायै नमः। चतुरायै नमः। चंद्रायै नमः। गुणत्रयविभागिन्यै नमः। हेरंबजनन्यै नमः। काल्यै नमः। त्रिगुणायै नमः। यशोधारिण्यै नमः। उमायै नमः। कलशहस्तायै नमः। दैत्य-दर्पनिषूदिन्यै नमः। बुद्ध्यै नमः। कांत्यै नमः। क्षमायै नमः। शांत्यै नमः। पुष्ट्यै नमः। तुष्ट्यै नमः। धृत्यै नमः। मत्यै नमः। वरायुधधरायै नमः। धीरायै नमः। गौर्यै नमः। शाकंभर्यै नमः। शिवायै नमः। अष्टसिद्धिप्रदायै नमः। वामायै नमः। शिववामांगवासिन्यै नमः। धर्मदायै नमः। धनदायै नमः। श्रीदायै नमः। कामदायै नमः।

मोक्षदायै नमः । अपरायै नमः । चित्स्वरूपायै नमः । चिदा-नंदायै नमः । जयश्रियै नमः । जयदायिन्यै नमः । सर्व-मंगलमांगल्यायै नमः ।जगत्त्रयहितैषिण्यै नमः। शर्वाण्यै नमः। पार्वत्यै नमः । धन्यायै नमः । स्कंदमात्रे नमः । अखिलेश्वर्यै नमः । प्रपन्नार्तिहरायै नमः ।देव्यै नमः । सुभगायै नमः । कामरूपिण्यै नमः । निराकारायै नमः । साकारायै नमः । महाकाल्यै नमः । सुरेश्वर्यै नमः । शर्वायै नमः । श्रद्धायै नमः । ध्रुवायै नमः । कृत्यायै नमः । मृडान्यै नमः भक्तवत्सलायै नमः । सर्वशक्तिसमायुतायै नमः । शरण्यायै नमः । सर्वकामदायै नमः । इत्यष्टोत्तरशतनामानि ॥

॥ अथावरणपूजा ॥

देव्या दक्षिणे—ऐं महाकाल्यै विच्चे नमः ॥ वामे—ह्रीं महालक्ष्म्यै विच्चे नमः ॥ पुरतः—क्लीं महासरस्वत्यैविच्चे नमः॥ वामे—हूं महिषाय नमः ॥ दक्षिणे क्षौं सिंहाय नमः ॥ पुरतः—गंगणपतये नमः ॥ हुं कालायनमः ॥ पश्चात् हूं मृत्यवे नमः॥ षट्दलेषु—ह्रैं रुद्राय नमः ॥ ह्रौं गौर्यै नमः ॥ श्रीं विष्णवे नमः ॥ श्रीं लक्ष्म्यै नमः ॥ ऐं ब्रह्मणे नमः ॥ ऐं सरस्वत्यै नमः ॥ तत्रैव—ह्रां हृदयाय नमः ॥ ह्रीं शिरसे

स्वाहा ॥ ह्रूं शिखायै वषट् ॥ ह्रैं कवचाय हुं ॥ ह्रौं नेत्रत्रयाय वौषट् ॥ ह्रः अस्त्राय फट् ॥ तत्रैव—गुं गुरुभ्यो नमः ॥ पं परमगुरुभ्यो नमः ॥ पं परमेष्ठीगुरुभ्यो नमः ॥ हरये नमः ॥ हरायनमः ॥ गणेशाय नमः ॥ तत्रैव—नंदजायै नमः । रक्तदंतिकायै नमः ॥ शाकंभर्यै नमः ॥ दुर्गायै नमः ॥ भीमायै नमः ॥ भ्रामर्यै नमः ॥ अथाष्टदलेषु—ब्राह्मयै नमः ॥ माहेश्वर्यै नमः ॥ कौमार्यै नमः ॥ वैष्णव्यै नमः ॥ वाराह्यै नमः ॥ इंद्राण्यै नमः ॥ नारसिंह्यै नमः ॥ चामुंडायै नमः ॥ पूर्वादिदिक्षु—अं असितांगभैरवाय नमः । रुं रुरुभैरवाय नमः । चं चंडभैरवाय नमः । क्रों क्रोधभैरवाय नमः । उं उन्मत्तभैरवाय नमः । कं कपालभैरवाय नमः । भीं भीषणभैरवाय नमः । सं संहारभैरवाय नमः ॥

पुनः पूर्वादिषु—लं इंद्राय नमः ॥ रं अग्नये नमः ॥ मं यमाय नमः ॥ षं निर्ऋतये नमः ॥ वं वरुणाय नमः ॥ यं वायवे नमः ॥ सं सोमाय नमः ॥ हं ईशानाय नमः ॥

तद्बहिः—पूर्वादि वज्राय नमः ॥ शक्त्यै नमः ॥ दंडाय नमः ॥ खड्गाय नमः ॥ पाशाय नमः ॥ अंकुशाय नमः ॥ गदायै नमः ॥ त्रिशूलाय नमः ॥ इत्यावरणपूजा ॥

ततः पूर्वोक्तमंत्रेण धूपदीपनैवेद्यादिमंत्रपुष्पांतपूजां कृत्वा नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताःस्मताम् इतिमंत्रैर्नमस्कृत्य यथासंभवं छत्रचामरगीतनृत्यवाद्यादिसमर्प्य कूष्मांडनारिकेलकदलीफलादिबलिं दत्वा ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि। यत्पूजितं मया देवि प्रसीद परमेश्वरि ॥ आवाहनं न जानामि न जानामि विसर्जनम्। पूजां चैव न जानामि प्रसीद परमेश्वरि ॥ अनेन पूजनेन श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यः प्रीयंतां ॥

॥ कुमारीपूजा ॥

देशकालौ संकीर्त्य शतचंडीजपांगत्वेन कुमारीपूजां करिष्ये इतिसंकल्प्य मूलेन षडंगं कृत्वा मूलमंत्रमुच्चार्य ॥ मंत्राक्षरमयीं देवीं मातृणां रूपधारिणीं ॥ नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहं ॥ इति कुमारीमावाह्य यथासंभवं पूजयेत् ॥ कुमार्यश्च प्रत्यहं शतं नव एकावा यथाशक्ति वा पूज्या॥ प्रत्यहमेकवृद्ध्या वा पूजयेत् ॥ ततो ब्राह्मणसुवासिनीपूजा ॥ एवं देवीकुमार्यादिपूजा प्रत्यहं कार्या ॥ ततः सर्वे विप्राः कृतांगन्यासाः शतं नवार्णमंत्रं जप्त्वा कवचार्गलकीलकानि सकृज्जप्त्वा सप्तशतीं जप्त्वांते रहस्यादि नवार्णं शतं च जपेत्। एकस्मिन्दि-

ने अनेकावृत्तिषु तु कवचादीनां प्रत्यावृत्ति नावृत्तिः ॥ एवमृत्विजः प्रथमदिने एकं द्वितीये द्वे तृतीये त्रीणि चतुर्थे चत्वारि रूपाणीत्येवं जपं कुर्युः ॥ ऋत्विजां यजमानस्य प्रत्यहं क्षीरमात्राशनं अशक्तौ हविष्याशनं वा । प्रत्यहं सहस्रं शतं दश वा ब्राह्मणान्भोजयेत् । पंचमेह्निहोमः ॥ नवरात्रेतु नवम्यामेव होमः ॥ क्वचित्तु अष्टम्यामारभ्य नवम्यां समापयंति ॥

॥ अथ होमः ॥

देशकालौ स्मृत्वा मया ब्राह्मणद्वारा कृतस्य शतचंडीजपस्य संपूर्णतासिद्ध्यर्थं जपदशांशेन तिलादिमिश्रपायसद्रव्येण होमं करिष्ये इतिसंकल्प्य ॥ अत्र केचित्पुण्याहवाचनमपिकुर्वंति ॥ तथापूर्वोक्तकलशस्थापनं देवतास्थापनं पूजनं चात्रैवकुर्वंति ॥ ततः सनवग्रहशतचंडीजपदशांशहोमं कर्तुं स्थंडिलादिकरिष्ये इतिसंकल्प्य स्थंडिलमुपलिप्योलिख्य तत्र ( शत )मंगलनामानमग्निं प्रतिष्ठाप्य समिध्य ध्यायेत् ॥ ततः प्रागकृतं चेदिदानीमीशान्यां दिशि नवग्रहस्थापनं कृत्वा तत्पूर्वतः कलशं स्थापयेत् ॥ ततोग्निसमीपमागत्यान्वाधानं कुर्यात् ॥ समिद्वयमादाय क्रियमाणे शतचंडीजपांगहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यं-

तमुक्त्वा आदित्यादिनवग्रहान् प्रतिद्रव्यमष्टाविंशतिसंख्याकाभिरष्टाभिर्वा समित्तिलाज्याहुतिभिः अधिदेवताः प्रत्यधिदेवताश्चचतुःसंख्याकाभिःतैरेवद्रव्यैःगणपतिचतुष्टयं इंद्राद्यष्टौलोकपालांश्चैकैकयासमित्तिलाज्याहुत्यायक्ष्ये ॥ महाकालीमहालक्ष्मीमहासरस्वतीमूलमंत्रेण शतवारं सप्तशतीमंत्रैः जपदशांशसंख्यया पायसतिलपलाशपुष्पसर्षपपूगीफललाजादूर्वांकुरयवबिल्वफलरक्तचंदनगुग्गुलुद्रव्यैर्यथालाभद्रव्यैर्वा तिलमिश्रपायसेन वा पुनर्मूलमंत्रेण शतवारं तैरेव द्रव्यैः आधारशक्त्यादिपीठदेवताः महाकाल्याद्यावरणदेवताश्चैकैकाहुत्यापायसाज्येनयक्ष्ये शेषेण स्विष्टकृतमित्याद्याज्यभागांतं कृत्वा ॥ यजमानः इदं हवनीयद्रव्यं यथादैवतमस्तु नममेति त्यजेत् ॥ नवग्रहादिभ्यः समित्तिलाज्यानिहुत्वा उक्तद्रव्याणि मूलमंत्रेण शतवारं हुत्वा सप्तशतीमंत्रैर्जपदशांशेन हुत्वा पुनर्मूलमंत्रेण शतवारं जुहुयात् ॥ मूलमंत्रोनवार्णमंत्रः ॥ नवार्णमंत्रस्यकेवलाज्येनैववाहोमः ॥ अत्राध्यायसमाप्तौउवाचस्थलेचपत्रपुष्पफलैर्होमः ॥

एवं प्रधानहोमं कृत्वा पीठदेवताभ्यो नामभिराज्यं पायसं च जुहुयात् ॥ आधारशक्त्यै नमः । मूलप्रकृत्यै नमः । कालाग्निरुद्राय नमः । महामंडूकाय नमः । कूर्माय नमः ।

वराहाय नमः । अनंताय नमः । भूम्यै नमः । अमृतार्णवाय नमः। रत्नद्वीपाय नमः । हेमगिरये नमः। नंदनोद्यानाय नमः । मणिभूम्यै नमः । रत्नमंडपाय नमः । कल्पतरवे नमः । रत्न-सिंहासनाय नमः । धर्माय नमः । ज्ञानाय नमः । वैराग्याय नमः । ऐश्वर्याय नमः । अधर्माय नमः । अज्ञानाय नमः । अवैराग्याय नमः । अनैश्वर्याय नमः । ब्रह्मणे नमः । अनंताय नमः । वास्तुपुरुषाय नमः। सं सत्वाय नमः । रं रजसे नमः । तं तमसे नमः । मां मायायै नमः । विं विद्यायै नमः । उड्डाणपीठेश्वरसहितोड्डाणपीठेश्वर्यंबायै नमः । मातृकापीठेश्वर-सहितमातृकापीठेश्वर्यंबायै नमः । जालंधरपीठेश्वरसहितजालं-धरपीठेश्वर्यंबायै नमः । कोल्हागिरिपीठेश्वरसहितकोल्हागिरि-पीठेश्वर्यंबायै नमः। पूर्णगिरिपीठेश्वरसहितपूर्णगिरिपीठेश्वर्यं-बायै नमः । संहारगिरिपीठेश्वरसहितसंहारगिरिपीठेश्वर्यंबायै नमः । कोल्हापुरपीठेश्वरसहितकोल्हापुरपीठेश्वर्यंबायै नमः । कामरूपपीठेश्वरसहितकामरूपपीठेश्वर्यंबायै नमः । गं गणेशाय नमः । क्षं क्षेत्रपालाय नमः। पां पादुकाभ्यो नमः। बं बटुकेभ्यो नमः । जं जयायै नमः । विं विजयायै नमः । जं जयंत्यै नमः । अं अपराजितायै नमः । अग्निमुखवेतालाय नमः । प्रेतवाहन-

वेतालाय नमः। ज्वालामुखवेतालाय नमः। धूम्राक्षवेतालाय नमः। कंदाय नमः। नालाय नमः। दलेभ्यो नमः। केसरेभ्यो नमः। कर्णिकायै नमः। अं सूर्यमंडलाय नमः। उं सोममंडलाय नमः। मं वह्निमंडलाय नमः। अं आत्मने नमः। उं अंतरात्मने नमः। पं परात्मने नमः। उं ज्ञानात्मने नमः। विं विष्णुमायायै नमः। चें चेतनायै नमः। बुं बुद्ध्यै नमः। निं निद्रायै नमः। क्षुं क्षुधायै नमः। छां छायायै नमः। शं शक्त्यै नमः। तृं तृष्णायै नमः। क्षां क्षांत्यै नमः। जां जात्यै नमः। लं ललितायै नमः। शां शांत्यै नमः। श्रं श्रद्धायै नमः। कां कांत्यै नमः। लं लक्ष्म्यै नमः। धृं धृत्यै नमः। वृं वृद्ध्यै नमः। स्तृं स्मृत्यै नमः। दँ ददायै नमः। तुं तुष्ट्यै नमः। पुं पुष्ट्यै नमः। मां मातृकायै नमः। भ्रां भ्रांत्यै नमः। ह्रीं सर्वशक्तिकमलासनाय नमः। सर्वात्मसंसर्गयोगपीठात्मने नमः। इति पीठदेवताहोमः।

॥ अथावरणदेवताः ॥

ऐं महाकाल्यैविच्चे। ह्रीं महालक्ष्म्यैविच्चे। क्लीं महासरस्वत्यैविच्चे। ह्रूं महिषाय नमः। क्षं सिंहाय नमः। गं गणपतये

नमः । ह्रूं कालाय नमः । ह्रूं मृत्यवे नमः । ह्रैं रुद्राय नमः । ह्रौं गौर्यै नमः । श्रीं विष्णवे नमः । श्रीं लक्ष्म्यै नमः । ऐं ब्रह्मणे नमः । ऐं सरस्वत्यै नमः । ह्रां हृदयाय नमः । ह्रीं शिरसे स्वाहा । ह्रूं शिखायै वषट् । ह्रैं कवचाय हुं । ह्रौं नेत्र-त्रयाय वौषट् । ह्रः अस्त्राय फट् । गुं गुरुभ्यो नमः । पं परम-गुरुभ्यो नमः । पं परमेष्ठिगुरुभ्यो नमः । हरये नमः । हराय नमः । गणेशाय नमः । नंदजायै नमः । रक्त दंतिकायै नमः । शाकंभर्यै नमः । दुर्गायै नमः । भीमायै नमः । भ्रामर्यै नमः । ब्राह्मयै नमः । माहेश्वर्यै नमः । कौमार्यै नमः । वैष्णव्यै नमः । वाराह्यै नमः । इंद्राण्यै नमः । नारसिंह्यै नमः । चामुंडायै नमः । अं असितांगभैरवाय नमः । रुं रुरुभैरवाय नमः । चं चंडभैरवाय नमः । क्रों क्रोधभैरवाय नमः । उं उन्मत्तभैरवाय नमः । कं कपालभैरवाय नमः । भीं भीषणभैरवाय नमः । सं संहारभैरवाय नमः । लं इंद्रायनमः । रं अग्नये नमः । मं यमाय नमः । क्षं निर्ऋतये नमः । वं वरुणाय नमः । यं वायवे नमः । सं सोमाय नमः । हं ईशानाय नमः । वज्राय नमः । शक्त्यै नमः । दंडाय नमः । खड्गाय नमः । पाशाय नमः । अंकुशाय नमः । गदायै नमः । त्रिशूलाय नमः ॥

एवं होमं कृत्वा स्विष्टकृदादिप्रायश्चित्तहोमांतं कृत्वा इंद्रादिनवग्रहक्षेत्रपालादिभ्यो माषभक्तबलींस्तत्तन्मंत्रैर्दद्यात् ॥ तत्र मंत्राः ॥ इंद्रंवो० इंद्रः सुरपतिश्चैव वज्रहस्तो महाबलः ॥ शतयागाधिपो देवस्तस्मै नित्यं नमोनमः ॥ इंद्राय सांगाय सपरिवाराय सशक्तिकाय सायुधाय इमं सदीपमाषभक्तबलिं समर्पयामि भो इंद्र इमं बलिं भक्ष दिशं रक्ष मम यजमानस्य आयुःकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता कल्याणकर्ता वरदोभव ॥ अनेन बलिदानेन इंद्रः प्रीयतां ॥ १ ॥ अग्निं दूतं । आग्नेयः पुरुषोरक्तः सर्वदेवमयोऽव्ययः । धूमकेतुरनाधृष्यस्तस्मै नित्यं नमोनमः अग्नये० इत्यादि० ॥ २ ॥ यमाय सोमं० । यमश्चोत्पलपत्राक्षः किरीटीदंडधृक्सदा ॥ लोकसाक्षी विशुद्धात्मा तस्मै नित्यं नमोनमः ॥ यमाय सांगायेत्यादि० ॥ ३ ॥ मोषुणः परापरा० निर्ऋतिस्तु पुमान्कृष्णः सर्वरक्षोधिपोमहान् ॥ खड्गहस्तोमहासत्वस्तस्मै नित्यं० निर्ऋतये सांगायेत्यादि० ॥ ४ ॥ तत्त्वायामि० । वरुणः सर्वलोकेषु पुरुषोनिम्नगाधिपः ॥ पाशहस्तोमहापाबाहुस्तस्मै नित्यं० । वरुणाय सांगायेत्यादि० ॥ ५ ॥ तववाय० सर्वप्राणात्मकोवायुः सर्वजंतुष्ववस्थितः ॥ ध्वजहस्तोमहाप्राण-

स्तस्मैनित्यं० वायवे सांगायेत्यादि० ॥ ६ ॥ सोमोधेनुं० गौरोयस्तु पुमान्सौम्यः सर्वौषधिसमन्वितः ॥ नक्षत्राधिपतिः सोमस्तस्मै नित्यं० सोमाय सांगायेत्यादि० ॥ ७ ॥ तमीशानं० ईशानः पुरुषः शुक्लः सर्वदेवाधिपो महान् ॥ शूलहस्तोविरूपाक्ष-स्तस्मै नित्यं० ईशानाय सांगायेत्यादि० ॥ ८ ॥ आयंगौः पृश्नि० योसावनंतरूपेण ब्रह्मांडं सचराचरम् ॥ पुष्पवद्धारये-न्मूर्ध्नि तस्मै नित्यं० अनंताय सांगायेत्यादि० ॥ ९ ॥ ब्रह्मजज्ञानं० पद्मयोनिश्चतुर्मूर्तिर्वेदावासः पितामहः ॥ कमंडलुधरोदेवस्त-स्मै ० ॥ ब्रह्मणे सांगायेत्यादि ० ॥ १० ॥ नवग्रहेभ्यः सांगे-भ्य इत्यादिना ग्रहेभ्यो बलिं दत्वा क्षेत्रपालाय दद्यात् ॥ क्षेत्रस्य पतिना ० सर्वभूताधिपाय क्षेत्राधिपतये शाकिनीडाकिनी-भूतप्रेतपिशाचादिपरिवारसहिताय इमं बलिं समर्पयामि ॥ भो क्षेत्रपाल अमुं बलिं भक्ष दिशो रक्ष मम यजमानस्य वा आयुः-कर्तेत्यादि ॥ बलिं गृह्णंत्विमे देवा आदित्यावसवस्तथा ॥ मरुत-श्चाश्विनौ रुद्राः सुपर्णाः पन्नगाः खगाः ॥ असुरायातुधानाश्च पिशाचोरगराक्षसाः ॥ डाकिन्योयक्षवेतालायोगिन्यः पूतनाः शिवाः ॥ जृंभकाः सिद्धगंधर्वानागाविद्याधरानगाः ॥ दिक्पा-लालोकपालाश्च ये च विघ्नविनायकाः ॥ जगतां शांतिकर्तारो-

ब्रह्माद्याश्च महर्षयः ॥ मा विघ्नं मा च मे पापं मा संतु परिपंथिनः ॥ सौम्या भवंतु तृप्ताश्च भूतप्रेताः सुखावहाः ॥ इतिमंत्रान्पठेत् ॥ अयं बलिः शूद्रेण दुर्ब्राह्मणेन वा नेयः ॥ ततो हस्तौ पादौ प्रक्षाल्याचम्य पूर्णाहुतिं जुहुयात् ॥ स्रु-चिस्रुवेण द्वादशवारमाज्यं गृहीत्वा नारिकेलादि च गृहीत्वा ॥ समुद्रादूर्मि० ३ मूर्धानं० १ पुनस्त्वा० पूर्णादर्वि० सप्ततेअग्ने० धामंतेविश्वं० मूलमंत्रः नमोदेव्यै इत्यादि मंत्राश्च ॥ ततो वसोर्धारां हुत्वा प्रणीताविमोकादि कर्मशेषं समाप्य ॥ मूलमंत्रेण होमदशांशेन दुग्धेन जलेन वा तर्पणं कृत्वा तेनैव मंत्रेण तद्दशांशेन मार्जयेत् ॥ ततो यजमान आचार्यादीन्वस्त्रा-द्यैः संपूज्य तेभ्यो गोमिथुनानि हिरण्यं च दद्यात् ॥ तत आचार्यादिभ्योन्येभ्यो वा कपिलागोनीलमणिश्वेताश्वछत्रचामर-भूमिशय्यासप्तधान्यानि यथासंभवं वा दद्यात् ॥ तत आचार्या-दयः कलशोदकेन सपत्नीकं सकुटुंबं यजमानं समुद्र-ज्येष्ठा-इत्यादिभिः सुरास्त्वेत्यादिभिर्ग्रहमंत्रैश्चाभिषिंचेयुः ॥ ततो यजमानो ग्रहाणामुत्तरपूजां कृत्वाचार्येण विसर्जनेकृते ग्रह-पीठदानं कृत्वा देवीं पंचोपचारैः संपूज्य महाबलिंदद्यात् ॥ तत्र क्षत्रियादिनाश्वनेषच्छागमहिषाणामन्यतरोदेयः ॥ विप्रेणतु

कूष्मांडबिल्वमिक्षवश्चदेयाः ॥ सचेत्थं॥ देवीं द्रोणपुष्पबिल्वा-म्रदलजातीचंपकैः संपूज्य कर्ता उदङ्मुखः पूर्वमुखं देवीमुखं वा बलिं गंधादिनाभ्यर्च्य ॥ पशुस्त्वं बलिरूपेण मम भाग्या-दुपस्थितः ॥ प्रणमामि ततः सर्वरूपिणं बलिरूपिणं ॥ चंडि-काप्रीतिदानेन दातुरापद्विनाशनं ॥ चामुंडाबलिरूपाय बले तु-भ्यं नमोस्तुते ॥ यज्ञार्थे बलयः सृष्टाः स्वयमेव स्वयंभु वा ॥ अतस्त्वां घातयाम्यद्य तस्माद्यज्ञेवधोऽवधः ॥ इति बलिमभि-मंत्र्य ऐं ह्रीं श्रीं इति मंत्रपुष्पं क्षिप्त्वा ॥ रसना त्वं चंडिकायाः सुरलोकप्रसाधकः ॥ ह्रांह्रींखड्ग आंहुंफट् इतिखड्ग मन्यद्वा शस्त्रं संपूज्य ॥ ॐ कालिकालियशेश्वरिलोहदंडायै नमः॥ इति बलिं छेदयित्वा ॐ ह्रीं ऐं ह्रीं कौशिकि रुधिरेणाप्यायतां इति देव्यै निवेद्य ततो माषपिष्टमयं शत्रुं कृत्वा खड्गेन छेदयित्वा स्कंदाय विशिखाय च दत्वा बलिशेषं रक्षोभ्यो हरेत् ॥ मंत्रस्तु ॐ ह्रीं स्फुरस्फुर कुंभ २ सुनु २ गुलु २ धुनु २ मारय २ विद्रावय २ विदारय २ कंपय २ कंपातय २ पूरय २ ॐ ह्रीं ॐ हुं फट् २ हुं मर्दय २ हुं ॥ ततः शेषं बहिर्दद्यात् ॥ तत्रमंत्राः ॥ बलिं गृह्णंत्विमं देवा इत्यादयःपूर्वोक्ता एव ॥ ततः स्नात्वा तिलकं धृत्वा देवीं प्रार्थयेत् ॥ तत्र मंत्राः ॥ खड्गिनी शू-

लिनी घोरा० १ शूलेन पाहिनोदेवि० ४ नमोदेव्यै महादेव्यै० ६ रूपं देहि यशो देहि भगं भगवति देहि मे ॥ पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे ॥ महिषघ्नि महामाये चामुंडे मुंडमालिनि । आयुरारोग्यमैश्वर्यं देहि देवि नमोस्तुते ॥ इति देवीं संप्रार्थ्य गुह्यातिगुह्यगोप्त्रीत्वं गृहाणास्मत्कृतं जपं ॥ सिद्धिर्भवतु मे देवि-प्रसादात्तव सुन्दरि ॥ इति देव्यैजपं निवेद्य ॥ कृतस्य कर्मणः सांगतासिद्ध्यर्थं कुमारीब्राह्मणसुवासिनीः पूजापूर्वकं संभोज्य संकल्प्य वा न्यूनातिरिक्तदोषपरिहारार्थं ब्राह्मणेभ्यो भूयसीं दक्षिणां दत्वाग्निं संपूज्य विभूतिं धृत्वा गच्छगच्छेत्यग्निंविसृज्य मूलमंत्रेण पुष्पेण देवीमुद्वास्य तेनैव षडंगं कृत्वा उत्तिष्ठब्रह्मण० अभ्यार० ॥ उत्तिष्ठ देवि चंडेशि शुभां पूजां प्रगृह्य च ॥ कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ॥ इति मंत्रैर्विसृज्या-चार्याय दत्वा मंत्रं पठेत् ॥ त्रैलोक्यमातर्देवित्वं सर्वभूतद-यान्विते ॥ दानेनानेन संतुष्टा सुप्रीता वरदा भव ॥ ततः यस्य-स्मृत्या० ॥ प्रमादात्कुर्वतांकर्म० इत्यादि जपित्वा कर्मेश्वरार्पणं-कृत्वा सुहृद्युतो भुंजीत ॥

॥ इति नवचंडीशतचंडीसहस्रचंडीहोमप्रयोगः ॥

——:(×):——